श्रीः

# योगि श्री नागलिङ्ग शिवाराध्य कृतिः

निगमान्तार्थनिष्कर्षनिष्कहारनामान्तरः

## श्री वेदान्तार्थपरिष्कारहारः



श्रीशैवमहाजनानां धनसाहाय्येन मुद्रापितः

१९३६

Registered ] [ मूल्यम् रु १–८–०

तेनालि शारदा मुद्राक्षरशालायां मुद्रितः

श्रीः

# योगि श्री नागलिङ्ग शिवाराध्य कृतिः

निगमान्तार्थनिष्कर्षनिष्कहारनामान्तरः

---

# श्री वेदान्तार्थपरिष्काररत्नहारः



श्रीशैवमहाजनानां धनसाहाय्यकेन मुद्रापितः

१९३६

Registered ]    [ मूल्यम् रु १-८-०

# ముద్రణార్థ ధనప్రదాతలు.

విజయవాడ పురవాస్తవ్యులు,

బ్రహ్మశ్రీ ఇవటూరి సాంబశివరావుగారు,

ఈ కుటుంబరావుగారు.

ఈ సోదరుల ధనసహాయముచే నీ గ్రంథములోని సిద్ధాన్త, అధికారి, సాధనపరిష్కారములును, ఈమని గ్రామవాస్తవ్యులగు శైవసమాజమువారి ధనప్రదానముచే జగత్పరిష్కారంబును, విశాఖపట్టణవాసులైన శైవమహాజనుల ధనవితరణముచే బ్రహ్మపరిష్కారంబును, మచిలీపట్టణము మొదలగు గ్రామవాసులగు శైవమహాజనుల ధనసాహాయ్యముచే కడమ పరిష్కారములును నిట్లు ఔదార్యశాలురగు శైవమహాజనుల ధనసాహాయ్యకముచే నీ గ్రంథరాజము సమగ్రముగా ముద్రింపింపఁబడియెను.

ఇట్లు,

ముదిగొండ నాగలింగశాస్త్రీ.

# ముద్రణార్థ ధనప్రదాతలు.

విజయవాడ పురవాస్తవ్యులు,

బ్రహ్మశ్రీ ఇవటూరి సాంబశివరావుగారు,

ఈ కుటుంబరావుగారు.

ఈ సోదరుల ధనసాహాయ్యముచే నీ గ్రంథమునందలి సిద్ధాంత, అధికారి, సాధనపరిష్కారములును, [illegible] గ్రామవాస్తవ్యులగు శైవసమాజమువారి ధనప్రదానముచే జగత్పరిష్కారంబును, విశాఖపట్టణవాసులైన శైవమహాజనుల ధనవితరణముచే బ్రహ్మపరిష్కారంబును, మచిలీపట్టణము మొదలగు గ్రామవాసులగు శైవమహాజనుల ధనసాహాయ్యముచే కడమ పరిష్కారములును నిట్లు ఔదార్యశాలురగు శైవమహాజనుల ధనసాహాయ్యకముచే నీ గ్రంథరాజము సమగ్రముగా ముద్రింపబడియెను.

ఇట్లు,

ముదిగొండ నాగలింగశాస్త్రి.



ग्रन्थकर्ता : योगिश्री नागलिङ्गशिवाराध्यः

ॐ

शिवाय गुरवे नमः

# भूमिका.

भो अभिज्ञमणयः! किञ्चि दिहावधत्त!

विदितमेवहि तत्रभवतां ब्रह्मपथीयपीठिकापाठकानां ब्रह्मविचार ग्रन्थरचनाविषयास्मदीयप्रवृत्तिमूल मखिलमपीति यद्यपि नत त्पुन र्निवेदन मर्हति। तथापि विशिष्य प्रकृतनिबन्धनिर्माणकारणं नजहात्येव विज्ञापनीयता मिति पुन रस्मि निविवेदयिषुः किमपि।

यत्किल ब्रह्मपथे प्रस्तुतां स्तांस्ता नौपनिषदा नर्था नधिकृत्य सम प्रविचारे क्रियमाणे भवे द्ग्रन्थविस्तरइति भिया तत्र तेषां संक्षिप्ततया न ते विजिज्ञासुजनमनोमनोज्ञता माप्नुवीरन्निति पुन स्तेषां सामग्र्येण विचार स्सम्प्राप्तोऽवसरतामिति प्रवृत्ति स्तदीयपरिष्कारे समजनि।

सापि विपक्षे निबन्धानां सहस्रश स्समुपलभ्यमानतया नैकेन तत्रापि संक्षिप्तार्थेन ब्रह्मपथेन विजिज्ञासूनां वेदनं भवे न्निर्विचिकित्स मिति पुष्टि मुपगतवती।

अथात्र, यद्यपि जगज्जीवपरात्मरूपं पाशपाशुपतिसंज्ञं तत्त्वत्रयमेव प्रधानतः परिष्करणीयम्। तथापि, पशोः पाशा द्विमुमुक्षो स्तद्धेतुभूत पतिसाक्षात्कारनिदानं साधनम्। साधकस्याऽधिकारगुणसमर्पक मधिकारिस्वरूपम्। फलरूपमुक्तिस्वरूपम्। तद्वारभूतगतिस्वरूपंचाऽवश्य

परिष्करणीयता मलभते त्वेते विषया यथावसरं यथापरात्मचोदनं परि ष्कृता न्यबन्धिषतच ।

त दयं निबन्ध श्श्रीमतां चरणसरसिजयोः पुष्पोपहारता माप्नु यादिति समर्पित आत्मनीननिर्भेद मामोद मुपजनयत्विति सांजलिबन्ध मभ्यर्थ्यन्ते गुणैकग्रहणपरा निर्मत्सरा विद्वांवरा इति ।

सुजनानुजीवी

ग्रन्थकृत् ।

ॐ

शिवायगुरवेनमः

# वेदान्तार्थपरिष्कारतारहारः

---

## गुरुस्तुतिः।

सदाशिवं शिवां स्कंदं केशवं पद्मसंभवं।
नंदीश्वरं कुंभयोनिं भरद्वाजात्रिगौतमान्॥ १
दधीचि मुपमन्युंच मार्कंडेयं पराशरं।
श्वेताचार्यंच तच्छिष्यं नीलकंठशिवाह्वयं॥ २
तस्यशिष्यान् हरदत्तभवदेवमुखान् सदा।
प्रणमामि ब्रह्मविद्या संप्रदायप्रवर्तकान्॥ ३
कृतदीक्षो ऽघोरमुखे ऽस्मत्कुलमूलो भरद्वाजः।
विश्वेश्वरेषुविदितो यस्तंवन्दे महर्षिवरम्॥ ४
नमोस्तु गुरवे नित्यं श्रीकंठशिवयोगिने।
श्रुतिसारशिवाद्वैतपरभाष्यविधायिने॥ ५
व्यासं सूत्रकृतं वृत्तिकृतं बोधायनं तथा।
श्रीकंठं भाष्यकर्तारं प्रणमामि मुनित्रयं॥ ६
सदाशिवसमारंभां श्रीकंठाराध्यमध्यमां।
अस्मदाचार्यपर्यंतां वंदे गुरुपरंपरां॥ ७
महापाशुपतज्ञानसंप्रदायप्रवर्तकान्।
अंशावतारा नीशस्य योगाचार्या नुपास्महे॥ ८

श्वेतादिलकुलीशान्तां योगाचार्यपरंपरां ।
सद्वादशोत्तरशतशिष्यसंख्यां स्मरा म्यहं ॥ ९
नम स्त्रयप्पष्टिमहागणेभ्य स्त्रयोदशभ्यो दशषोडशभ्यः
गणेश्वरेभ्यो गणनायकेभ्यो नमोनम श्शंकरकिंकरेभ्यः ॥ १०
ये रुद्रलोका दवतीर्य रुद्रा मानुष्य माश्रित्य जगद्धिताय ।
चरन्तिनानाविधचारुचेष्टा स्तेभ्यो नम स्स्थंवकपूजकेभ्यः ॥ ११
अस्तं व्रजन्त्यखिलनास्तिक हृत्तमांसि
फुल्लन्ति वैदिकसमाज मनोम्बुजानि ।
यस्योदयेन भुवि भानुसमानुभावं
तं श्रीनिवासमखिलं गुरु मानतोऽस्मि ॥ १२
मंगलन्दिशतु विघ्ननायको मंगलन्दिशतु शक्तिसायकः ।
मंगलन्दिशतु मे सदा शिवा मंगलन्दिशतु मे सदाशिवः ॥
यो विश्वप्रभवो यमेति निखिलं येनेद मारक्षितम्
यस्मैच श्रुतयो नमोविदधते यस्मात्परं नेक्ष्यते।
भूम्ना यस्य परिभ्रम त्यनुकल म्ब्रह्माण्डभाण्डावलि
र्यस्मिं स्सर्वमपि प्रतिष्ठित मिद न्तस्मैनम श्शम्भवे ॥
दिशावलीविश्रुत नागलिङ्ग
समाख्य माराध्यकुलाब्धि सोमम् ।
मतान्त राम्भोनिधि कुम्भयोनि
म्पितामहं लोकगुरु म्प्रपद्ये ॥ ३
गर्भे निवेश्य कलयन्प्रतिसंचरेषु
संश्लिस्य सर्गनिचये सुखय न्सुपुत्रौ ।

पुलम्पितेव परिरक्षति सर्वदा माम्
यस्तं मुमुक्षु रभवं शरणंगतोऽस्मि ॥ ४
यत्कृपाप्रसरणा त्पुरातना
लेभिरेहि गुरवोपि गौरवम् ।
भावये सतत मादिमंगुरु
न्दक्षिणाभिमुखमेव दैवतम् ॥ ५
परात्मना दक्षिणदिङ्मुखेन
यथानियुक्तोऽस्मि तथात्रर्वामि ।
ततः प्रवन्धावळिसंगतेन
गुणेन दोषेण न संसृजामि ॥ ६
स्वाज्ञान विस्मृततनु स्त्विह संसरामि
ब्रह्माहमेव हि भवन्निति वादरे र्या
माया विमोहयति शाम्यतु सा नितान्त
न्तत्त्वावबोधपरमास्त्र निरस्तरूपा ॥ ७
संसारमोक्ष स्थितिवन्धहेतो
स्सर्वात्मनोऽश्रान्त मुपासितस्य ।
पत्युः पशूनां परमप्रसादा
न्मुच्येयमि त्य स्त्वचला मतिर्मे ॥ ८
त्रयोविंश त्यून पंचसहस्र गणितेषु हि ।
कलिवर्षेषु वृत्तेषु वत्सरे धातृनामनि ॥ ९
मासिचैत्रे वळक्षेहि पक्षेच दशमीतिथौ ।
पुष्यर्क्ष इन्दुवारेच लग्ने कर्कट काह्वये ॥ ०१

केतौ कन्यागतेचैव मन्दे कुम्भस्थितेपिच ।
सगुरौ वृश्चिके मीने रविराहु बुधै र्युते ॥ ११
वृषस्थे सति शुक्रेच भौमेन सहितेतथा ।
कृष्णवेणी सरित्प्रान्ते ताडिकोण्डाह्वये पुरे ॥ १२
मल्लिकार्जुनदेवस्य क्षेत्रे योऽजनि विश्रुते ।
मोक्षधर्मैक निलयं न्यबन्धी द्धर्मसंग्रहम् ॥ १३
प्राचारी त्पत्रिकां शैवरहस्यार्थविबोधिनीम् ।
कृत नानाविधकृति श्चीर्णपाशुपतव्रतः १४
भारद्वाजकुलोद्भूत उद्भटाराध्यवंशजः ।
ज्वालाम्बिकाघोरनाथ दाम्पत्य फलितोदयः ॥ १५
श्री मर्द्वारेश्वराराध्य कल्याण गुरुसेवकः ।
श्री श्री निवासमखिराट् कृपाधिगत सत्कलः ॥ १६
तेन ब्रह्मविजिज्ञासु समाराधन शीलिना ।
योगिना नागलिंगेन त्रैलिंगे नेष्टलिंगिना ॥ १७
निगमान्तार्थ निष्कर्ष निष्कहारापराह्वयः ।
वेदान्तार्थ परिष्कार तारहारो निबद्ध्यते ॥
सविशेषश्शिवाद्वैत श्श्रीकंठेन प्रकाशितः ॥ १८
तत्र यत्सविशेषत्वं शंकरेण विखण्डितम् ।
मण्डयामास तद्भूयो रामानुजयतिः परम् ॥ १९
तदीयं शिवपारम्यं रामानुज विदूषितम् ।
मण्डयामास तत्सर्वं श्रीमानप्पयदेशिकः ॥ २०

एव मावरणापाया च्छिवाद्वैत प्रभाकरः ।
यथावद्भात्यपहर न्धीमतामान्तरन्तमः ॥ २१

प्रस्थानानि विमोक्षशास्त्रगहनेऽनेकानि वीक्ष्य भ्रमा
द्रन्तव्येऽध्वनि संशयाद्विचरतां खिन्नात्मनान्धीमताम् ।
पन्थानं श्रुति सम्मतं प्रकटितु न्निर्वर्तितेयं कृतिः ।
नैवोपक्रमिता बुधा ननुमया वैदुष्य दर्पोद्धतेः ॥ २२

गाढोपगूढ वितत स्वमताभिमान
च्छन्नेक्षणाः कृति मिमा न्नविलोकयेयुः ।
याथार्थ्य संग्रहणलोलुपताधुरीण
निष्पक्षपातधिषणा नक्कि माद्रियेरन् ॥ २३

मर्त्याळि दुर्विधिवशा द्धृत तत्वशास्ते
ष्युच्चावचाध्वनिचयं रचयन्ति केचित् ।
सर्वार्थ वित्सकलचेतन बुद्धिसाक्षी
त्र्यक्ष स्सदा नयतुमा मृजुनापथैव ॥ २४

येलोका बहुभाष्य दर्शनवशा द्विक्षिप्तनैजान्तरा
येभूयःकिल पक्षपातविरहा न्न्यायैकबद्धादराः ।
शृङ्गग्राहिकया परं श्रुतिगतन्तत्वं जिघृक्षन्ति ये
तेषामेवकृते विभातु रचिता सङ्क्षिप्तभाषा कृतिः ॥

धीमन्दरेण मथिता न्निगमान्तसिन्धो
रभ्युद्धृतेन सरसश्रुतिनिस्तुलेन ।
ग्रीवा मलङ्कुरुत हारवरेण विज्ञा
येनेक्षितेन सुधियोऽ भय माप्नुवीरन् ॥

## १. सिद्धान्तपरिष्कारः (निष्कर्षः)

अत्र केचित्, श्रु॥ एकमेवाऽद्वितीयमितिश्रुतेः, तदनन्यत्वमितिसूत्राच्च केवलाद्वैत एव सिद्धान्तइति। त दन्ये नक्षमन्ते द्वासुपर्णे त्यादिश्रुते रधिकन्तु भेदनिर्देशादितिसूत्राच्च केवलभेदस्य प्रतिपादितत्वेन तद्विरोधादिति॥ अत्रेद श्चिन्त्यते। भेदश्रुत्यनुरोधेन अधिकन्तु भेदनिर्देशादिति, अभेदश्रुत्यनुरोधेन तदनन्यत्वमितिच सूत्रितवत स्सूत्रकर्तुः कोऽयमभिप्रायइति॥

ननु, प्रपञ्चब्रह्मणो घंटपटयोरिव घटकुलाल्योरिवचाऽत्यन्त भेददर्शना द्भेदएव राद्धान्तइतिचेन्न। श्रु॥ सर्वं खल्विद म्ब्रह्म। तद नन्यत्व मारम्भणशब्दादिभ्य इत्यादिना तदनन्य त्वपरश्रुतिसूत्रविरोधात्॥

नच, तदनन्यत्वप्रतिपादना दत्यन्ताभेदइत्येव युक्तम्। अभेद श्रुतिबाहुल्या द्भेदश्रुतीना मौपाधिकभेदविषयत्वोपपत्ते रिति शङ्क्यम्। अनुपपत्तेः। तथाहि, ज्ञाज्ञौ द्वावित्यादिना अश्मकाष्ठलोष्टतृणादे रचेतन स्येव जीवस्याऽज्ञत्वादिना सर्वज्ञत्वादियुक्ता दीश्वरा दत्यन्तविलक्षणत्व-श्रवणा देवञ्चेतनस्यैवाऽधिकगुणवैषम्यादीश्वरभावानुपपत्तौ किमुताऽचेतनस्य स्वरूपविलक्षणस्य। एवञ्चोपपत्तिसहकृताभ्यो भेदश्रुतिभ्य उपपत्तिरहिताना मभेदश्रुतीना न्दुर्बलत्वात्केवलाभेदः प्रमाणविधुरः।

ननु, ब्रह्मप्रपञ्चयो श्शुक्तिरजतयोरि वैकतरमिथ्यात्वपक्ष स्साधीयान्। सत्यंज्ञानमिति ब्रह्मण स्सत्यत्वश्रवणेन जगतश्शुक्तिरजतव न्मिथ्यात्वावगमा दितिचे न्न। श्रु॥ स ईक्षत लोकान्नु सृजाइत्यादि-

श्रुतिभि स्सत्यसङ्कल्पेन ब्रह्मणा सिसृक्षापूर्वकंसृष्टस्य जगतो मिथ्यात्वा भ्युपगमस्य श्रुतिसूत्र विरुद्धत्वात् ।

नन्वेव म्भेदाभेदपरश्रुतिसूत्रप्रामाण्या द्भेदाभेदएव परमसिद्धान्तः उभयनिर्देशा दुभयसिद्धे स्सामञ्जस्या दितिचे न्नैवम् । तेजस्तिमिरयो-रिव विरुद्धस्वभावयो र्भेदतदभावयो र्वस्तुविरोधे नैकत्वाऽनवस्थितेः ।

एवञ्च, भेदाभेदपक्षस्य पृथग्भावरूपाऽत्यन्तभेदपक्षस्य अन्य तरानिर्वचनीयत्वपक्षस्यच प्रमाणविरुद्धत्वात् लौकिकवैदिकसकलप्रमाण सिद्धान्तर्गणिकभेदाप्रतिक्षेपक मपृथग्भावेनाऽनन्यत्वरूपं विशिष्टाद्वैतमेव भेदाभेदश्रुतीना मर्थइत्येव सूत्रकारस्याऽभिप्रायइति सिद्धम् ॥ श्रु ॥ एक एव रुद्रो नद्वितीयाय तस्थे । शिव मद्वैत ञ्चतुर्थ म्मन्यन्ते । मायान्तु प्रकृतिं विद्या न्मायिनन्तु महेश्वर मितिच चिदचिदाकारपरमशक्तिविशि ष्टस्य शिवस्याऽद्वितीयत्वश्रवणात् शक्तिविशिष्टशिवाद्वैतइति । विशिष्ट शिवाद्वैतइति। शिवाद्वैतइति च वेदान्तराद्धान्त स्समाख्यायतइति दिक् ॥

## २. अधिकारिपरिष्कारः

साधनचतुष्टयसम्पन्न श्चीर्णपाशुपतव्रतो ब्रह्मविद्याया मधिकारी ।

नित्यानित्यविवेको विराग श्शमादिसम्पत् मुमुक्षाचेति चतुष्टयं साधनानाम् ॥

अत्र, नित्यानित्यविवेकोनाम - नित्यउपासनाफलभूतोऽपवर्गः । अनित्यःकर्मफलभूतस्स्वर्गादिरितिविवेकः ॥ अतएवश्रुतिः । यथेहकर्मचितो लोकः क्षीयते । परीक्ष्य लोका न्कर्मचिता न्ब्राह्मणो निर्वेद माया न्न

स्त्यक्कृतः कृतेन । न स पुनरावर्तत इतिच। कर्मफलस्य क्षयित्व मुपासन फलस्याक्षयित्व ञ्कर्मफला नित्यत्वज्ञानस्य तद्विरागहेतुता ञ्चोपदिशति ॥

अत्र केचित्-नित्यः प्रत्यगात्मा। अनित्या देहेन्द्रियादय इति ज्ञानमिति तन्न । आत्मज्ञानस्य ब्रह्मविद्याश्रवणफलतया तस्याऽधिकारि विशेषणत्वे श्रवणस्यानर्थक्यापत्तेः । आत्मज्ञाने सम्पन्ने ब्रह्मविद्याश्रवणं श्रवणे सम्पन्ने चात्मज्ञान मित्यात्माश्रयस्य दुरुद्धरत्वाच ॥

एवञ्च--नित्यानित्यविवेका दनित्येषु कर्मफलेषु वैराग्य न्तत श्शमादिसम्पत्त्या मुमुक्षाचेति क्रमो युक्तः ॥

ननु ॥ श्रु ॥ शान्तो दान्त उपरत स्तितिक्षु रित्यत्रोपरतिशब्देन सन्यासोऽभिधीयत इतिचे न्न । निषिद्धकाम्यकर्मव्यापारा दुपरमस्यै वोपरतिशब्देन विवक्षितत्वेन सन्न्यासस्याऽतदर्थत्वात् ॥

नच ॥ श्रु ॥ सन्न्यस्य श्रवण ङ्कुर्यादिति वचनेन सन्न्यासश्श्रव णाङ्गतया विहितइति वाच्यम् , तत्र सन्न्यासपदेन काम्यकर्मत्यागस्य कर्मफलत्यागस्यच विवक्षितत्वात् । अतएव-काम्याना ङ्कर्मणां न्यासं सन्यासं कवयो विदुः ॥ यस्तु कर्मफलत्यागी स त्यागी त्यभिधीयत इतिच स्मर्यते ॥

नापि , यतय श्शुद्धसत्त्वाइति वचनेन सन्न्यासो निगद्यत इति शङ्क्यम् । अत्र , यतिशब्देन यमगुणसम्पत्ते रभिधानात् ॥

ननु , श्रु ॥ अत्याश्रमस्थ स्सकलेन्द्रियाणीति श्रुत्या विद्याङ्ग-तया सन्यासो विधीयत इतिचे न्न । अत्याश्रमपदेन पाशुपतव्रतस्यैव विवक्षि-तत्वात् । तथाच । श्रु ॥ व्रत मेत त्पाशुपत न्तत्समाचरे न्मुमुक्षु र्नपुन-र्भवायेति , मुक्तिसाधनतया पाशुपतव्रतस्य विहितत्वेन मुक्तिसाधन

प्रकरणे निगदितस्याऽत्याश्रमपदस्य पाशुपतव्रतपरत्वावसायात् । ततश्च श्रु ॥ अत्याश्रमिभ्यः परम म्पवित्रमिति , अत्याश्रमी सर्वदा सकृद्वाज - पेदितिच पाशुपतव्रतमेव निगमान्तेषु विद्याङ्गतयाऽभ्यासेन श्रूयते ॥

नचाऽत्याश्रमपद म्पाशुपतव्रतसमाख्यतया ऽप्रमितमितिचोद्यम् । मोक्षधर्मपर्वणि नवत्यधिकशततमेध्याये, दक्षप्रजापतिम्प्र तीश्वरवाक्ये—गतान्तै रध्यवसित मत्याश्रम मिदं व्रतम् । मया पाशुपत न्दक्ष शुभ मुत्पादित म्पुरा, इति पाशुपतव्रतस्याऽत्याश्रमसमाख्यतया स्मरणात् । अतएवच, श्रु ॥ तेषामे वैतां ब्रह्मविद्यांवदेत शिरोव्रतं विधिव द्यैस्तु चीर्णमिति श्रुति श्चीर्णपाशुपतव्रतानामेव ब्रह्मविद्याग्रहणेऽधिकार मुप-दिशति तस्मा दत्याश्रमपदं नसन्न्यासपरम् ॥

नच , श्रुतिगतशिरोव्रतशब्दितं व्रतान्तरमिति शङ्क्यम् । व्रत म्पाशुपत ञ्चीर्णं यैर्द्विजै रादरणतु । तेषामे वोपदेष्टव्य मिति वेदानु-शासनमिति सूतसंहितायां पाशुपतपरत योपबृंहितत्वात् ॥

अतएवच , गुरूपसदनविधात्रीश्रुतिः श्रोत्रिय म्ब्रह्मनिष्ठमिति श्रौताग्निधारिणं गृहिणमेव गुरु मुपसत्तव्य मुपदिशति ।

नच , श्रोत्रियपदं गौण्यावृत्या यतिपरमपि भवितु मर्हतीति शङ्क्यम् । तस्य यतिपरत्वे प्रसाध्यमाने शिष्यं समित्पाणिं विदधती श्रुति र्व्याकुप्येत् । गुरो रनग्निकत्वे समिधां शीतापनोदार्थाग्निप्रज्वलना त्ताऽन्य त्प्रयोजन मुत्पश्यामः । तस्मा त्सन्न्यासो ब्रह्मविद्याग्रहणाङ्गमिति नयुक्तम् ।

अत्रेद मनुसन्धेयम् , ब्रह्मजिज्ञासायाः परमं प्रयोजनं कैवल्यमित्य विवादम् ।

तच्च । सू ॥ अर्चिरादिनातत्प्रथितेरिति । सू ॥ हार्दानुगृहीत श्शताधिकयेतिच, सूत्रयन्नाचार्यः । अर्चिरादिगतिलभ्यम् , अर्चिरादिगतिं हार्दब्रह्मनुग्रहैकसाध्याञ्च निर्धारयामास । अतएव ।श्रु ॥ अङ्गुष्ठमात्रः पुरुषः । श्रु ॥ ऊर्ध्वं प्राण उन्नयति अपानं तिर्यगस्यति । :मध्येवामनमासीनं विश्वेदेवाउपासतइत्याद्याश्श्रुतयोहार्दं ब्रह्म सर्वोपास्य मामनन्ति, हार्दंच ब्रह्म । श्रु ॥ प्राणेष्वन्तर्मनसोलिङ्गमाहुः । श्रु ॥ लिङ्गे सुपुप्तिरित्यादि श्रुत्यन्त रैकार्थ्यात्प्रा णलिङ्गरूपमि त्यवगम्यते । ततएवच । श्रु ॥ अध्यात्म योगाधिगमेन देव म्मत्वा धीरो हर्षशोकौ जहाति । त मात्मस्थम् येऽनुपश्यन्ति धीरा स्तेषांशान्ति श्शाश्वतीनेतरेषा मित्याद्या श्श्रुतयः प्राणलिङ्गानुसन्धानमेव विमुक्तेः परमसाधन मामनन्ति, प्राणलिङ्गसाक्षा त्कारस्यच इष्टलिङ्गानुसन्धानसुसाधतया इष्टलिङ्गधारणस्य स्वात्मनिष्ठपर मात्माभिव्यञ्जकतया श्रु ॥ सोश्नुते सर्वा न्कामा न्सह ब्रह्मणेति श्रुतपर मेश्वरसायुज्यरूपपरममुक्तिद्योतकतयाच भस्मरुद्राक्ष शिवलिङ्गधारणात्मक म्पाशुपतव्रतं परमेश्वरसायुज्यरूपकैवल्यफलकब्रह्मविद्याश्रवणाङ्गतया विहित मिति । अधिकन्तु ब्रह्मपथे लिङ्गधारणसर्वस्वेचेति नेहपुनः ।

एवञ्च , साधनचतुष्टयसम्पन्नो ब्रह्मचारी गृही वनस्थो यतिर्वा पाशुपतव्रत्येवाऽधिकारी त्यनवद्यम् ॥

## ३- साधनपरिष्कारः

निष्कामनिजधर्मसमुच्चिता उपासनारूपज्ञानशब्दिता भक्तिरेव परमं साधनं मुक्तेः ।

# उपासनाविधिपरिष्कारः

ननु , श्रु ॥ तमेवं विदित्वाऽतिमृत्यु मेति । नाऽन्यः पन्था अय नाय विद्यते। ज्ञानादेवतु कैवल्यमित्यादिश्रुतिस्मृतिभि रनुभवरूपं ज्ञानमेव परममुक्तिसाधनतया ऽवगम्यतइतिचे न्न, उदाहृतश्रुत्यादिसूक्तिभि रुपा सनारूपज्ञानस्यैव विवक्षितत्वात् । अन्यथा, ज्ञानस्य विधेयताया अन भ्युपगमेन उपासनाविधायकाना मनन्तानां श्रुतिसूक्तीनामानर्थक्यापा तात्। तथाच, श्रु ॥ आत्मावारेद्रष्टव्यः। सोन्वेष्टव्यः । आत्मानमेव लोक मुपासीत । ओमित्येव ध्यायथात्मानम् । तस्मिन्यदन्त स्तदुपासि तव्यम्। प्राचीनयोग्योपास्व। शिवएको ध्येय इत्येव ज्ञातीयका न्यनन्तानि वचना न्युपलक्ष्यन्ते ।

ननु, विधिच्छाया नीमानि वचनानि नतु विधायकानि तत्र लिङादय श्श्रूयमाणाअ प्यनियोज्यविषयत्वा दुपलादिषु प्रयुक्तक्षुरतैक्ष्ण्या दिव त्कुण्ठीभूता इत्युक्त मितिचे न्न। सू ॥ सर्ववेदान्तप्रत्यय श्चोद नाद्यविशेषा दित्याचार्येण चोदनायाः प्रतिपादितत्वेन तद्विरोधात् ।

नच , सगुणासु ताव द्विद्यासु विद्यतएव विधान मित्युक्ततया आचार्योक्तचोदनाया स्सगुणविषयत्वेन निर्गुणविद्याया नविधिविषयत्व मिति शङ्क्यम् , सर्वेषामपि वेदान्तानां सगुणविषयत्वेन तत्र चोदनाया स्सर्वसम्मतत्वात् ।

किञ्च , सर्ववेदान्तप्रत्ययमिति चोदनां सर्ववेदान्तज्ञानविषया मवधारयता आचार्येण सगुणासु विधान मभ्युपगच्छद्भिः परैरपि सगुण स्यैव सर्ववेदान्तविषयत्वाभ्युपगमसिद्धेश्च ॥

ननु, यद्यपि वेदान्तेषूपासनाविधय स्तत्रतत्र प्रतीयन्ते। तथापि तेषा न्तात्पर्यलिङ्गसद्भावा द्ब्रह्मण्येव प्रामाण्यं। ननूपासनाविधि ष्विति चेन्न। तेष्वपि तात्पर्यलिङ्गसद्भावात्। तथाहि - यद्युपासना नविधीयेरं स्तदोक्तफलावाप्ति स्तदुपयोगिब्रह्मसाक्षात्कारश्च नस्यात्। तदभावे सर्वे वेदान्तै र्ब्रह्मणः प्रतिपादनमपि व्यर्थस्यात्। तत्प्राप्त्युपायोपदेशेनैव तत्साफल्य स्योपपादनीयत्वात्। तस्मा त्स्वाध्यायविध्यापादित म्ब्रह्म परवाक्याना म्पुरुषार्थपर्यवसायित्व न्तत्प्राप्त्युपायविधानं विना नसम्भ वती त्युपपत्तिरूप न्तात्पर्यलिङ्ग मुपासनाविधिष्व प्यस्ती त्यवगम्यते। एवञ्च, वेदान्ताना म्ब्रह्मणि विधौच तात्पर्यसत्वा दुभयत्रापि प्रामाण्य मविचलम्।

नच, मुक्तिसाधनतया श्रुतं ज्ञान मुपासनारूपमिति नप्रमित मिति शङ्क्यम्, सामान्यस्यविदे र्विशेषरूपोपासिपरत्वस्य छागपशुन्यायेन सिद्धत्वात्। उपास्तौ बहुळं वेदेतिप्रयोगदर्शनात्। आवृत्त्यधिकरणे वेदान्ते ष्पक्रमोपसंहारयोर्विद्युपास्त्यो र्व्यतिरेकेण प्रयोगो दृश्यतइत्युक्त्या परैरपि विदेरुपासनारूपत्वाभ्यनुज्ञावगमात्। असकृदावृत्तस्य ज्ञानस्यै वोपासनाशब्दितत्वाच्च। अतएव। श्रु॥ तमेवं विदित्वाऽतिमृत्यु मेति। ईशं ज्ञात्वाऽमृता भवन्ति। ज्ञात्वा शिवं शान्ति मत्यन्त मेति। ध्यात्वा मुनि र्गच्छति भूतयोनिम्। ध्याननिर्मथनादेव पाश न्दहति पण्डित इत्यादिना ज्ञानध्यानपदे समानार्थकतया निर्दिश्येते॥

# भक्तिज्ञानैकरूप्यपरिष्कारः

नन्वेवं ज्ञान स्योपासनारूपत्वेपि भक्ते स्तदन्यतया तस्या ज्ञान शब्दितत्व न्नसिध्यतीतिचे दुच्यते। भक्तेः ध्रुवानुस्मृतिरूपत्वाव्यभिचारेण तस्या ज्ञानोपासनाशब्दाभिधेयत्व न्नानुपपन्नम् ।

किञ्च, यथाश्रुतिषु, तमेवं विदित्वाऽतिमृत्यु मेति, ज्ञात्वा शिवं शांन्ति मत्यन्त मेतीत्यादिना ज्ञानस्य परमेश्वरप्राप्तिसाधनत्वं श्रूयते । तथा स्मृतिषु, पुरुष स्स परः पार्थ भक्त्या लभ्य स्त्वनन्यया । भक्ति म्मयि परा कृत्वा मामे वैष्य स्यसंशयः । मद्भक्ता यान्ति मामपीत्या दिना भक्तेः परमेश्वरप्राप्तिसाधनत्वंस्मर्यते ॥ यथैवच श्रुतिषु, ज्ञानादेव । नान्यः पन्था इत्यादिना ज्ञाना दन्यस्य पथो मुक्तिसाधनत्वं निवार्यते । तथैवच स्मृतिषु, नाहंवेदै र्नतपसा नदानेन नचेज्यया, भक्त्या त्वनन्ययेति, मोक्षसाधनसामग्र्यां म्भक्तिरेव गरीयसीतिच भक्ति व्यतिरिक्तस्य पथो मुक्तिसाधनत्व न्निवार्यते । एवञ्च , श्रुतिस्मृत्यविरोधा न्यथानुपपत्त्या भक्तिज्ञानपदयो रैकार्थ्यं मवश्याभ्युपेयम् ।

ननु, यद्येवम् , ज्ञान मवगतिरूपम् । भक्तिः पारमेश्वरानुरक्तिरूपा चेति लौकिकी प्रसिद्धि र्विरुध्येतेतिचे त्सत्यम् । एवमपि , वेदान्तेषु विधीयमानस्य वेदन स्योपासनारूपत्वावश्यम्भावेन, उपासनायाश्च तैलधा राव दविच्छिन्नस्मृतिसन्तानरूपतया भक्तेरपि प्रीतिपूर्वकानुसन्धानरूप त्वेनच , भक्तिज्ञानोपासनाना मैकरूप्यानतिवृत्तेः भक्ते र्ज्ञानशब्दितत्व मविरुद्धम् ।

किञ्च, श्रु ॥ मुमुक्षुर्वै शरण मह म्प्रपद्ये, सर्वधर्मा न्परित्यज्य मामेकं शरणं व्रजइत्यादिश्रुतिस्मृतिभि स्सा भक्तिः प्रपत्तिशरणागतिश ब्दाभ्यामपि व्यवह्रियते ॥

ननु, भवता भक्त्युपासनयो रेकार्थवृत्तित्व मभ्युपेतम्। श्रुति र्हीम मर्थं नसहते। तथाच, श्रद्धाभक्तिध्यानयोगा दवेहीति भक्ति न्ध्यानादतिरिक्ता मुपदिशति। तस्मा द्भक्त्युपासनयो रेकार्थवृत्तित्व मश्रुतिसम्मतमितिचे न्न। प्रकृत श्रुत्या भक्तिरूपध्यानयोगस्य मुक्ति-साधनत्वोपदेशेन भक्ते र्ध्यानातिरिक्तत्वाप्रतीतेः। अथवा, भक्तेः स्नेह-पूर्वकानुसन्धाना द्ध्याना न्निरन्तरस्स्मृतिसन्तानाच्चेति, ज्ञानावस्था विशेष मभिप्रेत्य भक्तिंध्याना दतिरिक्ता मुपदिशती त्यविरोधः।

एवञ्च, वेदन मसकृदावृत्त मुपासनं। स्नेहपूर्वक मनुसन्धान म्भक्तिरि त्युभयोर प्यनुसन्धानरूपत्वा विशेषा देकार्थ वृत्तित्व मविप्रतिपन्नम्।

नच, ध्यानयोगा दवेहीतिश्रुत्या भक्तिध्यानयो र्ज्ञानसाधनत्वमेव निगद्यतइति शङ्क्यम्।

ततस्तु त म्पश्यते निष्कळ न्ध्यायमानइति श्रुत्यन्तरानुरोधेन तत्रत्यावेहिपदस्य परमेश्वरसाक्षात्कारवाचितया पराभिमतस्वानुभवरूप-ज्ञानवाचित्वाभावात्।

ननु, भवता भक्तेः ज्ञानावस्थाविशेषरूपत्वमुक्तम्। त द्विरुद्धम्। शमाद्यधिकरणे, विनिर्मुक्तसकलेतरदेवताराधना त्रिविधकरण-सम्पाद्या विशिष्टाष्टाङ्गयोगिनी परमशिवपरिचर्यामयी वैदिकी क्रियाभक्तिरिति

भगवत्पादैः भक्तेः क्रियारूपत्वपरिष्कारा दितिचे दुच्यते। ज्ञानस्यापि मानसक्रियात्वाव्यभिचारेण भक्तेः ज्ञानावस्थाविशेषरूपतया भगवत्पाद निरुक्तलक्षणाऽविरोधात्। सेवा भक्ति रुपास्तिरिति नैघण्टुकोक्ते र्भक्त्युपास्त्यो रेकार्थवृत्तित्व म्प्रमितम्। भजइत्येष धातुर्वै सेवाया म्परिकीर्तितः। तस्मा त्सेवा बुधैः प्रोक्ता भक्तिशब्देनभूयसीति नैघण्टुकोक्तेरेव सेवाभक्त्यो रेकार्थवृत्तित्वावगमेन परमशिवपरिचर्यामयत्वरूप-लक्षण मनुगतम्। स्नेहपूर्व मनुध्यान म्भक्तिरि त्यभिधीयतइति नैघण्टुकोक्ते र्भक्ते र्ज्ञानावस्थाविशेषरूपत्वं सिद्धम्।

एवञ्च, भक्तेः क्रियारूपत्व म्परिष्कुर्वाणैरपि भगवत्पादैः त्रिविधकरणसम्पाद्येति विशेषणेन तस्या मानसक्रियारूपत्व मभ्युपगच्छद्भिः ज्ञानशब्दितत्व मभ्युपगतमेवेति तदुक्तं निष्कृष्टलक्षणं नकिञ्चिद प्यननुकूलम्।

ननु, भवता ज्ञानस्य मानसक्रियारूपत्व मुक्तं। नत द्युक्तम् वैलक्षण्यात्। क्रियाहि नाम सा यत्र वस्तुस्वरूपनिरपेक्षैव चोद्यते। पुरुषचित्तव्यापाराधीनाच। ज्ञानन्तु प्रमाणजन्यं प्रमाणञ्च यथाभूतवस्तु-विषयम्। अतो ज्ञान ङ्कर्तु मकर्तु मन्यथावा कर्तु मशक्यम्। केवल वस्तुतन्त्रमेव तत्। नचोदनातन्त्रम्। नापि पुरुषतन्त्रम्। तस्मा न्मानसत्वेऽपि ज्ञानस्य मह द्वैलक्षण्य मित्युक्तत्वा दितिचेत्। उच्यते। यद्यपि ज्ञानस्य वस्तुतन्त्रत्वं सम्मतमेव। तथापि तस्य नतावता ज्ञातृतन्त्रत्वं प्रतिहन्यते। ज्ञात र्यप्रयते ज्ञानासिद्धे रनुभवसिद्धत्वात्।

अतएव, ज्ञातारं ज्ञेयविषये प्रवर्तयन्त्यो द्रष्टव्यइत्यादय श्चोदनापरा वेदान्तसूक्तय स्सङ्गतार्थाः।

ततएवच, सू॥ सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषादित्य चार्येण चोदनाया स्सर्ववेदान्तज्ञानविषयत्व मुक्तञ्च सङ्गच्छते।

किञ्च, वाक्येन परोक्षत्वेन ज्ञाते ब्रह्मणि तत्साक्षात्का योपासनाविधि र्भवति सप्रयोजनः। उपासनारूपज्ञानस्यैव साक्षा त्कारकारणत्वात्।

एवञ्च, भक्तेः ज्ञानशब्दितत्वं समुपपन्नमेवेति युक्तम् नन्वेवमपि, तेजस स्तमसेव विद्यायाः कर्मणा समुच्चयो नोपपद्य वस्तुविरोधात्। इतिचे दुच्यते। कर्मज्ञानयो र्विरोधो दुरुपपादः

नच, अकर्त्रात्मप्रतिपत्ति र्ज्ञानम्। कर्मतु कर्त्रात्मप्रतिपत्ति बीजमिति कर्मज्ञानयो र्विरोधः पर्वतव दविकम्प्यः। अतएव, यदात्मैक विज्ञान न्त त्केनचि त्कर्मणा ज्ञानान्तरेणवा ह्यमूढ स्समुच्चिचिषतीत्यु मिति चोद्यम्। अकर्त्रात्मप्रतिपत्ते र्भ्रान्तिरूपत्वात्। सू॥ कर्ता शास्त्रा र्थवत्वादिति जीवात्मनः श्रु॥ सहि सर्वस्यापि कर्तेति परमात्मनश्च कर्तृ प्रतिपत्तेः प्रमाणसिद्धत्वेन तद्विपरीताया अकर्त्रात्मप्रतिपत्ते र्य थार्थत्वावसायात्।

## कर्मज्ञानसमुच्चयपरिष्कारः

---

ननु, अन्ध न्तमः प्रविशन्ति येऽविद्यायागुं रता इति कर्मनिष्ठाना मन्धतमः प्रवेशाम्नानेन कर्मणो मुक्तिसाधनविद्यया स मुच्चयो नसङ्गच्छतइतिचे न्न। तथा, कर्ममात्रनिरता नुद्दिश्याम्नाने तस्या स्सूक्तेः कर्मज्ञानोभयनिष्ठविषयत्वाभावात्। ततएव। श्रु॥ततो भूयइव ते। यउ विद्यायागुंरताइति केवलज्ञाननिष्ठानुद्दिश्य ततोपि बहु

तरान्धतमःप्रवेशश्रवणेन केवलज्ञाननिष्ठापि निराकृता । ततएवच परै रपि , तत स्तस्मा दन्धात्मका त्तमसः भूयइव वहुतरमेव तमः प्रविशन्ति । के कर्म हित्वा ये उ येतु विद्यायामेव देवताज्ञानएव रता अभिरता इति विवृतम् । एव क्केवलकर्मनिष्ठा क्केवलज्ञाननिष्ठाश्च प्रतिषिध्य श्रु ॥ विद्याश्चाऽविद्याश्च य स्तद्वे दोभयग्ं सहेति । समुच्चयस्य कण्ठरवेण श्रुत्यैव विहितत्वा न्नकिमपि , विरुध्यते ततएवच सू ॥ विहितत्वा च्चाश्रमकर्मापि सर्वापेक्षाच यज्ञादिश्रुते रश्ववदिति चाचार्योपि विद्यां विहितसर्वकर्मापेक्षा मवधारयति ।

नच , मोक्षस्य कर्मसाध्यत्वेऽनित्यत्वापत्तिः । श्रु ॥ ‘ तद्यथेह कर्मचितो लोकः क्षीयत एवमेवाऽमुत्र पुण्यचितो लोकः क्षीयत ’ इति श्रुतेरिति वाच्यम् । अथ य इहात्मान मननुविद्य व्रज न्त्येतांश्च सत्या न्कामां स्तेपामिति विद्यारहितकेवलकर्मकृतां लोकस्यैव क्षयित्वश्रवणात् । तथा , अन्यत्रापि , योवा एत दक्षर मविदित्वाऽस्मि न्लोके जुहोति यजते तप स्तप्यते वहूनि वर्षसहस्राणि तदेवाऽस्य तद्भवति यदिहाऽनेवं विन्महत्पुण्य ङ्कर्म करोति । तद्धाऽस्या न्ततः क्षीयते । एव मात्मानमेव लोक मुपासीत । सय आत्मानमेव लोक मुपास्ते । नाऽस्य कर्मक्षीयतइत्यादिना तत्र विद्यारहितकेवलकर्मणः क्षयित्वस्य विद्यायुक्तकर्मफलस्याऽक्षयित्वस्यच प्रतिपादनाच्च ।

नच , कर्मजन्यत्वे मोक्षस्याऽनित्यत्वं स्यात् । य त्कृतक न्त दनित्यमिति व्याप्तेरिति वाच्यम् । सय आत्मानमेवलोक मुपास्ते नाऽस्य कर्म क्षीयतइति ब्रह्मविदा कृतस्य कर्मणः क्षयाभाव स्याम्नातत्वेन लौकिकन्यायस्य श्रुतिवाधितत्वात् ।

## कर्मणो गुणकर्मत्वपरिष्कारः

---

ननु, श्रु ॥ विद्याञ्चाऽविद्याञ्चेति श्रुतेः कर्मणोपि ज्ञानस्य साक्षा न्मोक्षफलत्वेनाऽर्थकर्मत्वमेवाऽङ्गीकर्तुं युक्तम्। नतु व्रीहिप्रोक्षणवच्चित्तसंस्कारकतया गुणकर्मत्व मितिचे न्न। धर्मेण पाप मपनुदति विशुद्धसत्व स्ततस्तु तम्पश्यते निष्कलं ध्यायमानइत्यादि श्रुतिस्मृतिप्रामाण्यानुरोधेन कर्मणा श्चित्तशुद्धिसाधकत्वमात्राभ्युपगमात्।

नच, कर्मणा श्चित्तगतमलापकर्षद्वारा ज्ञानसाधनत्वाभ्युपगमे व्रीहिगततुपविमोकद्वारा क्रत्वपूर्वसंयुक्तस्या व्यवहननस्य यथा तुषविमोकपर्यन्तमेवाऽनुष्ठानम्। नतु यावत्क्रत्वपूर्वोदय न्तथा कर्मणां द्वारभूतचित्तशुद्ध्युदयपर्यन्तमेवाऽनुष्ठानं स्यादिति शङ्क्यम्। निर्मुक्ततुषेषु व्रीहिषु पुन स्तुषाणामिव चित्ते शुद्धे पुन र्ज्ञानोदयप्रतिबन्धकदुरिताना म्प्रसक्त्यभावे तावत्पर्यन्तमेवाऽनुष्ठानं युज्येत। शुद्धचित्तस्य ज्ञानार्थं श्रवणादिषु प्रयतमानस्यापि यावद् ज्ञानोदयं प्रतिबन्धकदुरितानां सम्भावितत्वेन तन्निवृत्ते रपेक्षितत्वात्। तस्मात् संस्कारसर्वबला त्कर्मणाश्चित्तशुद्धिमात्राभ्युपगमेपि यावज्ज्ञानोदय न्तदपेक्षितचित्तशुद्ध्यनुवृत्तये तदर्थकर्मापेक्षा भवत्येवेति ज्ञेयम्।

यत्तु, अननुष्ठितकर्मापि प्राग्भवीयकर्मवशा द्यो विशुद्धसत्व स्सारासारतादर्शने नोत्पन्नवैराग्यः कृत न्तस्य कर्मानुष्ठानेन: वैराग्योत्पादात् योगिना प्राग्भवीयकर्मानुष्ठानादेव तत्सिद्धेरिति त दसमञ्जसम्। चित्तशुद्धिकर्मानुष्ठानयोः कार्यकारणभावाक्षतेः। नहि प्राग्भवीयसुकृतवशा दल्लब्धो महानिधिरिति तावता वाणिज्यादे रर्थसाधनत्व मनुपपन्नम्भवति

अन्यथा-पुराकृतसुकृतपरिपाकसुप्रसन्नपरमेश्वरप्रसादविशेषवशात्, 'प्रस-न्नेसति कीटोवा पतङ्गोवा विमुच्यते। गर्भस्थोपि विमुच्यत' इति वचनेन गर्भस्थवामदेवस्यापि ज्ञानोत्पत्तिश्रवणेनच ब्रह्मविचारस्यापि ज्ञानसाधनत्व म्भज्येत। तस्मात् जन्मान्तरीयकर्मवशात् चित्तशुद्धिसम्भवेन कर्मानुष्ठान विद्ययोःकार्यकारणभावविरहइति नयुक्तम्।

अतएव, श्रु॥ तमेतंवेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेनेत्यादिश्रुत्या यज्ञादीनां ज्ञानसाधनत्व माम्नातम्। ननु, ब्राह्मणा विविदिषन्ति वेदितु मिच्छन्ति नतु विदन्ति। वस्तुतः प्रधानस्यापि वेदनस्य प्रकृत्यर्थतया शब्दतो गुणत्वात्। इच्छायाश्च प्रत्ययार्थतया प्राधान्यात् प्रधानेनच कार्यसम्प्रत्ययात् नहि राजपुरुष मानयेत्युक्ते, वस्तुतः प्रधानोपि राजा पुरुषविशेषणतया शब्दत उपसर्जन आनीयते अपितु पुरुषएव शब्दत स्तस्याऽप्राधान्या दितिचे न्न। इच्छाया अपुरुषार्थत्वात्। तथाच, इच्छाया स्स्वतः पुरुषेणाऽर्थनीयत्वा सम्भवा त्तस्या स्तत्फलेच्छयाऽर्थनीयत्वं वक्तव्यम्। तत्तु नसम्भवति। श्रवणादिप्रवृत्तिद्वारा विविदिषाफलभूतायां विद्याया मिच्छासत्त्वे तत्सत्वा त्तदसत्त्वे फलेच्छाविरहाच्च। तस्मा दिच्छा न पुरुषार्थः।

किञ्च, लिङादिभि र्विधिबोधकैः कर्मणा मिष्टसाधनत्वेऽ वगते तत्तत्कर्मसाध्य ङ्किमितीष्टविशेषाकाङ्क्षाया मिच्छाविषयत्वेन निबद्धं विशिष्योपात्तञ्च य त्तस्यैव कर्मसाध्यत्वेनाऽन्वेतु मुचितत्वेन फलवाक्ये ष्विच्छाविषयत्वेन निबद्धस्यैव कर्मफलत्व मवगम्यते। अतएव, स्वर्गकामादिवाक्येषु स्वर्गादिकमेव फलम् नतु स्वर्गकामना। तस्मा त्कर्मणा मिच्छासाधनत्वोक्ति रयुक्ता। सर्वापेक्षाच यज्ञादिश्रुते रित्यादिना

आचार्येण यज्ञादीनां ज्ञानसाधनत्वस्यैव निरूपितत्वेन तद्विरोधाच्च।

अपिच, अश्वेन जिगमिषति, असिना जिघांसतीत्यादा श्वादे गत्यादिसाधनत्वस्यैव लोकसिद्धत्वाच्च।

अत्रेद मवधेयम्। विद्याञ्चेतिमन्त्रेहि, सहश्रुतिः, कर्मज्ञा वेदनयो र्यौगपद्य म्प्रतिपादयन्ती ज्ञानानुष्ठानकाले कर्मानुष्ठान म्बोधयति अविद्यया मृत्यु न्तीर्त्वा विद्ययाऽमृत मश्नुतइत्युत्तरार्थेन तदुपयोग ब्रवीति। प्राचीनकर्मभि रुपासनानुष्ठानप्रतिबन्धकदुरितनिवृत्तावपि त प्रवृत्तस्य आप्रायण म्प्रत्यह मनुवर्तनीयाया न्तस्या म्प्रतिबन्धकत स्थित न्तत्कालएव प्रामादिकतया जातया सम्भावितदुरितजातं तत्सं प्युपासनासमकालमनुष्ठितेन कर्मजातेन तीर्त्वा, ततो निर्विघ्न मविच्छि मनुवृत्तया विद्यया मुक्ति म्प्राप्नोतीति तस्यार्थः। इदं विद्यानुष्ठानप्रवृ प्रतिबन्धकदुरितनिवर्तकतया समारब्धविद्यस्य विद्यानुष्ठानानुवृत्त्या प्रतिबन्धकदुरितनिवर्तकतयाच विद्योपकारककर्मद्वैविध्यम् सू विहितत्वाच्चाश्रमकर्मापीति सूत्रभाष्ये स्पष्टीकृत म्भगवत्पादैः।

एवञ्च, विद्यायाःकर्मणा समुच्चय श्श्रुतिसूत्रसम्मत इत्यलम्। तस्मा न्निष्कामनिजधर्मसमुच्चिता उपासनारूपज्ञानशब्दिता भक्तिर्व मुक्तेः परमसाधनमिति सुष्ठु।

## ध्यानयोगविधिपरिष्कारः

ननु, भवता ध्यानयोगस्य परमात्मसाक्षात्कारसाधनत्वं निगद्यते। त न्नसङ्गच्छते। साङ्ख्यतारकामनस्कयोगानामे वात्मसाक्षात्कारसाधनत्वप्रसिद्धे रितिचेत्। उच्यते। इह यद्यपि, साङ्ख्यतारका

मनस्का स्तत्साधनत्वेन निगदिताः ।

यथा, श्रु ॥ अन्योन्तर आत्मानन्दमयइति सांख्ययोगः । श्रु ॥ ओमित्येवात्मानं ध्यायथेति तारकयोगः । मनो यन्नमनुत इत्यादिनाऽमनस्कयोगश्च । तथापि, एतेषां ध्यानयोगसाधनत्वद्वारैव परमेश्वरसाक्षात्कारसाधनत्व मेष्टव्यम् ।

अन्यथा, अभिध्यायीत, निदिध्यासितव्य इत्यादयो ध्यानविधयोऽनुपपद्येरन् । अतएवच, ओमित्येवात्मानं ध्यायथेति तारकयोगस्य ध्यानाङ्गत्व माम्नातं सङ्गच्छते । ततएवच, मोक्षधर्मपर्वणि । एकविंशत्यधिकत्रिशततमेऽध्याये, एवंहि परिसङ्ख्याय ततो ध्यायन्ति केवलमिति ध्यानयोग मुपदिश्य- स्वयुक्तः पश्यते ब्रह्म यत्तत्परममव्ययम् । महतस्तमसोमध्येस्थितं ज्वलनसन्निभमिति ब्रह्मसाक्षात्कारो ध्यानयोगलभ्य उपदिष्टः । तथा, गीतास्वपि भागवतीषु, आत्मसंस्थ म्मनः कृत्वा नकिञ्चिदपि चिन्तये दित्यारभ्य - युंजन्नेवं सदात्मानं योगी विगत कल्मषः । सुखेनब्रह्मसंस्पर्श मत्यन्तं सुख मश्नुतइति । एवम् । विकल्पहानेनैकाग्र्यात्क्रमेणेश्वरतापदमिति श्री प्रत्यभिज्ञायाम् । श्रीस्पंदेपि, यदा क्षोभः प्रलीयेत तदा स्या त्परमम्पदमिति । श्रीज्ञानगर्भेपि,

विहाय सकलाः क्रिया जननि मानसी स्सर्वतो
विमुक्तकरणक्रियानुसृतिपारतन्त्र्योज्ज्वला ।
स्थितै स्त्वदनुभावत स्सपदि वेद्यते सापरा
दशा नृभि रतन्द्रिता समसुखामृतस्यन्दिनीति ॥

कक्ष्यास्तोत्रेपि, सर्वाःशक्ती श्चेतसा दर्शनाद्या स्स्वे स्वे वेद्ये यौगपद्येन विष्वक् । क्षिप्त्वा मध्ये हाटकस्तंभभूत स्तिष्ठन्विश्वाधार

एको ऽ वभासीतिच ॥

एवञ्च , श्रु ॥ दृश्यतेऽत्वग्र्यया बुद्ध्या । अध्यात्मयोगाधिगमे देव म्मत्वा धीर इत्यादीन्यपि वचनानि सुसङ्गतानि । एतेन ध्यानयो समधिगम्यं पारमेश्वरं ज्ञानं यथाभूतवस्तुविषयमेव सत् ध्यानचोद तन्त्रमपि भवतीति सिद्धम् । अथयत् निरीश्वरसांख्य मवलम्ब्य परै त्वविवेचनसिद्ध मात्मनोज्ञानमे वोपनिषत्प्रतिपाद्यमिति निगदित न्तद दितिच । तत्वविवेचनमात्रसिद्धस्यात्मनः श्रु ॥ आदित्यवर्ण न्तम परस्तात् । महत स्तमसो मध्ये स्थितं ज्वलनसन्निभ मित्यादि श्रुतिस्मृ निवेदितादित्यवर्णत्वाद्यसम्भवात् । तस्मा द्यथोक्तमेव युक्तम् ।

ननु , यद्यपि भवता ध्यानयोगस्य परमेश्वरसाक्षात्कारसा नत्व मुपपादितम् । तथापि , मोक्षधर्मपर्वणि ध्यानयोगं प्रस्तुत्य ।

पाषाणइव मेघोत्थै र्यथा बिन्दुभि राहतः ।<br>
नालं चालयितुं शक्य स्तथा युक्तस्य लक्षणम् ।<br>
शङ्खदुन्दुभिनिर्घोषै र्विविधै र्गीतवादितैः ।<br>
क्रियमाणै र्नकम्पेत युक्त स्यैत न्निदर्शनम् ॥

इत्याद्युक्त्या तस्य कष्टसाध्यत्वावगमेन तत्साध्यः परमेश्वरसाक्षात्का स्तल्लभो विमोक्षश्च दुराप इतिचेत् । उच्यते ।

उक्तवचनैः ध्यानयोगस्य कष्टसाध्यत्वावगमेपि दुरापत्वानवगमे दृढयत्नवत स्तत्सिद्धि र्नासंभाविता ।

अथ , तस्येहजन्म न्यकृतमुक्त स्याऽलभ्यत्वेपि प्रयतमा स्यासिद्धस्यापि ।

' प्राप्य पुण्यकृतां लोका नुषित्वा शाश्वती स्समाः ।

शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ।
तत्र तं बुद्धिसंयोगं लभते पौर्वदैहिकम् ।
यततेच ततो भूय स्संसिद्धौ कुरुनन्दन ।
पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोपि सः ।
जिज्ञासुरपि योगस्य शब्दब्रह्माऽतिवर्तते ।
प्रयत्ना द्यतमानस्तु योगसंशुद्धकिल्बिषः ।
अनेकजन्मसंसिद्ध स्ततो याति परांगति' मिति
जन्मान्तरे तत्सिद्धिः प्रतिपादिता ।

किंच, एवंविधस्य ध्यानयोगस्य कष्टसाध्यत्वेपि श्रु॥ उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्। ध्यात्वा मुनिर्गच्छति भूतयोनिमिति कैवल्यश्रुत्या उमासहायत्वादिलक्षणलक्षितपरमेश्वरध्यानस्य सुसाधस्यैव परमेश्वरप्राप्तिरूपपरमुक्तिसाधनत्वाम्नानेन श्रुतिनिरूपितार्थे आस्तिकानां संशयानुदयेनच परमेश्वरध्यानयोग स्तन्मूलो विमोक्षश्च सुसाधइ त्यसंशय मिति सर्वं समुपपन्नमितिच शिवं ।

---

## ४. जगत्परिष्कार:

---

ननु, कार्यत्वा ज्जगत् घटादिकमिव कुलाला न्निमित्ता दीश्वरा दन्यदेवेति युक्तम्।

नच, ईश्वरकार्यत्वा ज्जगतः कारणानन्यत्वं सिध्यतीति वाच्यम्। गोमयवृश्चिकादौ सत्यपि कार्यकारणभावे वैलक्षण्यदर्शनात्। घटमृत्पिण्डादि ष्वर्थक्रियादिव्यवहारभेदा दभेदासिद्धे रितिचे दुच्यते। श्रु॥ वाचारम्भणं विकारो नामधेय म्मृत्तिकेत्येव सत्यम्। सदेव सोम्येद मग्र आसी देकमेवाऽद्वितीयम्। ऐतदात्म्य मिदꣳ सर्वम्। विश्व म्भूत म्भुवनं चित्रम्बहुधा जातं जायमानञ्च यत्। सर्वोह्येष रुद्र इत्यादिशब्देभ्यः कारणा त्परमेश्वरा दनन्यदेव जगद्रूप ङ्कार्यमिति विज्ञायते। अत्र यदुक्तम्। कार्यकारणत्व न्नानन्यत्वसाधक मिति त दसारम्। घटादिकार्यभावेच तदेव मृद्द्रव्य ङ्घटइत्युपलभ्यमानत्वात्। ततः कारणा दनन्यदेव कार्यम्।

नच, कार्यकारणयो रनन्यत्वेऽर्थक्रियादिव्यवहारभेदो नसंस्यतीति वाच्यम्। मृद्घटयो र्वस्त्वैक्ये प्यवस्थाभेदा दर्थक्रियादिभेदस्य सूपपन्नत्वात्। ततो मृद्घटयोरिव ब्रह्मप्रपञ्चयोरपि व्याप्यव्यापकभावा दनन्यत्वम्। तथा पुराणवाणी - शक्त्यादिच पृथिव्यन्तं शिवतत्वसमुद्भवम्। तेनैकेनतु तद्व्याप्त म्मृदा कुम्भादिकं यथेति।

अन्येतु, एकविज्ञानेन सर्वविज्ञानं प्रधानत्वसादृश्यादिना युज्यते। तथाच, यथा प्रधानपुरुषाणां ज्ञानाज्ञानाभ्यां ग्रामो

ज्ञातो ऽ ज्ञात इत्येव मादिव्यपदेशो दृश्यते। यथावा, सादृश्या देकस्त्रीज्ञाना दन्यस्त्रीज्ञानंच। "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यादित्यादिनाऽवगम्यते। अन्यथा, सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञात मित्यत्रैकपिण्डशब्दौ वृथा प्रसज्येयाताम्। मृदा विज्ञातयं त्येतावतैव वाक्यस्य पूर्णत्वा दिति। तदसत्। कार्यकारणाभेदोप पादनपराया अनन्तश्रुत्यन्तनिगदिताया एकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाः प्रधानत्वसादृश्यादिना गौणार्थपरत्वग्रहणस्य लाक्षणिकत्वेन दुष्टत्वात्। "एकेन मृत्पिण्डेन विज्ञातेनेतिवाक्यस्य "मृदा विज्ञातयेति वाक्यसमानार्थकत्वेन तेन विशेषार्थाऽसिद्धेश्च। पिण्डाद्यवस्थाविशेष रहितकेवलमृदो दुर्ज्ञेयतया तत्रत्यैकपिण्डशब्दयो र्मृत्स्वरूपज्ञापनार्थतया सार्थकत्वेन ताभ्यां सादृश्याद्यर्थसमर्थनस्य दुराशाविषयत्वाच्च।

नच, भाल्लवेयादिश्रुत्यन्तरानुरोधा त्तादृशार्थसिद्धिरिति शंक्यम्। प्रात्यक्षिकश्रुतिशतविरुद्धाऽश्रुतचरभाल्लवेयादिवचनप्रामाण्यपरिग्रहे ऽ वैदिकमूर्धन्यत्वमात्रसिद्धेः। तस्मात्केवलभेदवादिनिगदितम् "कार्यत्वाज्जगत् निमित्ता दीश्वरा दन्यदि त्ययुक्तमेव।

## जगत्सत्यत्वपरिष्कारः

---

अत्रकेचित्, कारणा दनन्य त्कार्यम्। नहि परमार्थतः कारणव्यतिरिक्तं कार्यनाम वस्त्वस्ति। अविद्यानिबन्धनत्वा त्सकलकार्य तद्व्यवहारयोः। अतो यथा, कारणभूता न्मृद्द्रव्या द्घटादिषु विकारेषूपलभ्यमाना द्व्यतिरिक्तं घटकरकादिकार्यं व्यवहारमात्रालम्बन

-म्मिथ्या। तथा कारणभूतं ब्रह्मैव सत्यम्। तस्मा त्कारणा द्व्यतिरिक्तं कार्यं नास्तीति कारणा दनन्य त्कार्यम्।

नच, शुक्तिकारजतादीनामिव घटादिकार्याणा मसत्यत्वाप्रसिद्धे दृष्टान्तानुपपत्तिरिति शङ्क्यम्। अनुवर्तमानं सत्यं व्यावर्तमानं मिथ्येति युक्त्या मृद्द्रव्यमात्रसत्यताया स्तदतिरिक्तघटादिकार्यमिथ्यात्वस्य च व्यवस्थितत्वात्। तथाहि, अनुवर्तमान मधिष्ठानभूतं मृद्द्रव्यमेव सत्यम्। व्यावर्तमानास्तु घटशरावादयोऽसत्यभूताः।

किञ्च, सत आत्मनो विनाशाभावा दसतश्च शशविषाणादे रुपलब्ध्यभावा दुपलब्धिविनाशयोगि कार्यं सदसद्भ्या मनिर्वचनीयमिति गम्यते। अनिर्वचनीयञ्च शुक्तिकारजतादिव न्मृषैव। तस्यचाऽनिर्वचनीयत्वं प्रतीतिबाधाभ्यां सिद्धमिति त दसत्। व्यावर्तमानत्वमात्रस्य मिथ्यात्वहेतुत्वाभावात्।

तथाहि, द्वयो र्ज्ञानयो र्विरोधएव बाध्यबाधकभावो बाधितस्य व्यावृत्तिश्च दृश्यते। यस्मि न्देशे यस्मि न्काले यस्य सद्भावः प्रतिपन्न स्तस्मि न्देशे तस्मि न्काले तस्याऽभावः प्रतिपन्नश्चेत्। तत्र विरोधा द्बलवतो बाधकत्वम् बाधितस्य निवृत्ति श्चोपपद्यते। देशान्तरकालान्तरसम्बन्धितयाऽनुभूतस्याऽन्यदेशकालयो रभावप्रतीतौ विरोधाभावे बाध्यबाधकभावो नविद्यते। रज्जुसर्पादिषुतु तद्देशकालसम्बन्धेनैवाऽभावप्रतीते र्विरोधो बाधकत्वं व्यावृत्ति श्चोपपद्यतइति देशकालान्तरव्यावर्तमानत्वं न मिथ्यात्वसाधकम्। यद प्युक्तम्। उपलब्धिविनाशयोगि कार्यं मनिर्वचनीयतया मृषेति। तद प्यविचारसहम्। उपलब्धिविनाशयोगस्याऽनित्यत्वप्रयुक्तत्वेन मृषात्वसाधकत्वाभावात्।

ननु, जगदिदंमिथ्या। तथाच, सू ॥ तदनन्यत्व मारम्भणशब्दादिभ्य इत्यधिकरणं, कार्य माकाशादिक म्बहुप्रपञ्च ञ्जगत्। कारण म्ब्रह्म तस्मा त्कारणा त्परमार्थतोऽनन्यत्वं व्यतिरेकेणाऽभावः कार्यस्याऽवगम्यतइति विवरणा दितिचे न्न। अनन्यत्वशब्दस्याऽभेदवाचितयाऽसत्ववाचित्वाभावात्।

किञ्च, कारणव्यतिरेकेण कार्यमेव नभवे त्कथ मेकविज्ञानेन सर्वविज्ञानप्रतिज्ञा समर्थ्येत। अभेदेहि कार्यकारणयोः कारणे विज्ञाते कार्यं विज्ञातमिति शक्यते वक्तुम्। विज्ञातकारणाभिन्नत्वा त्कार्यस्य। असत्वे पुनः कार्यस्य कारणविज्ञानेन कथं सर्वकार्यविज्ञानं सर्वस्यैवाऽभावात्।

नच, मृत्तिकेत्येव सत्यमिति कारणस्यैव सत्यत्वावधारणेन वाचारम्भणादिशब्दैः कार्यस्याऽनृतत्वाभिधानेनच, कारणव्यतिरेकेण कार्यस्याऽसत्वं श्रुत्या प्रतिपाद्यतइति वाच्यम्। नहीयं श्रुतिः, मृत्तिकायास्सत्यत्वं विकारस्याऽनृतत्वंचाऽपूर्वं प्रतिपादयति। किन्तु लोकदृष्टमेव दृष्टान्तत्वेनाऽनुवदति। प्रसिद्धस्यैव दृष्टान्तत्वात्। लौकिक परीक्षकाणां यस्मि न्नर्थे बुद्धिसाम्यं स दृष्टान्त इत्यभियुक्तोक्तेः। तथाच, यादृशं सत्यत्वं मृत्तिकाया लोकसिद्धं यादृशं चानृतत्वं विकारस्य तादृश मेवाऽनुवदती त्यवश्य मङ्गीकार्यम्। न बाधितत्वरूप मनृतत्वं विकारस्य लोकसिद्धम्। नहि घटकाले मृदि घटोनास्तीति बाधः प्रतीयते। नापि मृत्तिकाया स्सत्यत्व मबाधितत्व मुच्यते परैस्तस्याअपि सत्यत्वानङ्गीकारात्। मृद्धटयो रुभयोरपि व्यावहारिकसत्यत्वाभ्युपगमेन तै स्सत्यत्वविशेषानङ्गीकाराच्च।

किन्तु, घटव्यतिरेकेण स्वातन्त्र्येण सत्वमेव मृद स्सत्यत्वम्।

तथाच, मृद्व्यतिरेकेण मृदात्मतां विना यत्र सत्वाभावलक्ष मनृतत्व न्तदात्मतया तत्र सत्वरूप मभेदं गमयती त्यभिप्रायेण तद न्यत्व मारम्भणशब्दादिभ्य इत्युक्तम् ।

नापि, मृदात्मतां विना यत्र सत्वाभावः अत्यन्ताभावे प्युपपद्यतइति कथ मभेदं साधयेदिति चोद्यम् । अत्यन्तासत्वे कार्य त्वानुपपत्त्या मृद्घटइति सामानाधिकरण्यप्रतीतिवलेन चाऽभेदएव पर्य वसानात् ।

तथाच, परैरेव वाक्यान्वयाधिकरणे उक्तम् । 'आत्मविज्ञा नेन सर्वविज्ञानं प्रतिज्ञायाऽनन्तरेण ग्रन्थेन तदेवोपपादयति । ब्रह्म त म्परादा द्योऽन्यत्रात्मनो ब्रह्म वेदेत्यादिका श्रुतिः योहि ब्रह्मक्षत्रादिक जग दात्मनोऽन्यत्र स्वातन्त्र्येण लब्धसद्भावं पश्यति । त मिमं मिथ्या दर्शिनं तदेव मिथ्यादृष्टं ब्रह्मक्षत्रादिकं जग त्पराकरोतीति भेददृष्टि मपोह्य " इदं सर्वं यदय मात्मेति सर्वस्य वस्तुजातस्य आत्माव्यति रेकिता मवधारयतीति ।

अपिच, नहि वाचारम्भणवाक्येन विकारस्याऽनृतत्व मुपादा नस्य सत्यत्वं चोच्यते प्रकृतानुपयोगात् । किन्तु, अभेदए वोच्यते। तस्यहि वाक्यस्याऽय मर्थः । आरभ्यतइ त्यारम्भणम् । तच्च, नामधेय- विशेषणम् नपुंसकत्वात् ।

नच, मृद्व्यतिरिक्तो मृदि जातो घटादि रर्थः । सच, विकारो घटादि मृत्तिकेत्येव सत्यमिति । तथाच, उपादाना द्विकारस्याऽ त्यन्तभेदं प्रतिषिध्य अभेदएव प्रतिपाद्यते ततो मृद स्सत्यत्व मुच्यते । मृत्तिका सत्येति श्रुतेः ।

नच ; अत्यन्तभेदप्रतिषेधे भेदसत्यत्वापत्तिः। नहीदं वाक्यं भेदात्मत्वपरम्। तथासति, कार्यकारणभावानुपपत्तेः।

किन्तु, येनाऽश्रुतंश्रुतंभवतीत्यत्र अश्रुतमिति श्रुतभिन्नत्वोक्त्या अत्यन्तभिन्नत्वेनाभेदासत्वशङ्कानिराकरणेनाऽभेदसत्वपरमेव। तस्मात्कारणाद्व्यतिरेकेण कार्यस्य स्वातन्त्र्येण सत्वाभावा त्कार्यं कारणमात्र मित्येव याथार्थ्य मितिहृदयम्।

किञ्च, यदि मृद्व्यतिरेकेण घटस्य सत्व न्तदा घटइति प्रतीतेः किमालम्बन न्त द्वक्तव्यम्। नताव न्मृदेव तस्याः कुलालव्यापारा त्प्रागपि सत्वेन तदापि घट इति प्रतीत्यापत्तेः। अथ तद्व्यतिरिक्तम्। तर्हि-किन्तत् ? नचेत् कथं घटइति प्रत्यक्षा प्रतीतिः ?। प्रत्यक्षे विद्यमान विषयस्यैव कारणत्वात्। विद्यतेचेत् ? कथं तस्याऽसत्वम् ? विद्यमानस्यैव सत्यशब्दार्थत्वात्। अस्ति भवति विद्यतइत्यादीना म्पर्यायत्वात्। अथाऽन्यदेवसत्व म्पारिभाषिकन्त दबाध्यत्वमितिचेत् ?। घटेपि तदस्त्येव। नहि घटकाले तद्बाधादृश्यते।

अथ सर्वदा सर्वत्राऽबाध्यत्वं सत्त्वम्। नच, घटस्य तदस्ति देशान्तरे तस्य बाधइतिचे? त्तर्हि नित्यत्वेसति विभुत्वं सत्वम्। तद्बाधश्चाऽसत्वंस्यात्। ईदृशंचाऽसत्वं घटादीना मिष्टमेव। नहि कार्यस्य नित्यत्वविभुत्वे केनचि दभ्युपगम्येते। अथ मृद्व्यतिरेकेणाऽन्यत्र घटस्य स्वातन्त्र्येण सत्वाभावएवाऽसत्वम्। तदेवच मिथ्यात्व मित्येतदपिचाऽनिष्टम्। न ह्युपादानव्यतिरेके णोपादेयस्य स्वातन्त्र्येणाऽन्यत्र सत्वं केनचि दभ्युपगम्यते। एतावता न त न्मिथ्यात्व मुच्यते। सूत्रे, तदनन्यत्वशब्दग्रहणेन मिथ्यात्वशब्दाग्रहणात्।

अपिच, श्रु ॥ यदा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्म विज्ञातं स्यादिति। यथा सोम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञा स्यादिति। यथा सोम्यैकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातं स्या त्तिच। मृण्मयलोहमणिकार्ष्णायसान्येव दृष्टान्ततया श्रुत्या परिगृहीतानि नतु परपरिगृहीतानि घटकरकाकाशमृगतृष्णिकोदकादीनि। यदि का स्यौपाधिकत्वे मिथ्यात्वेवा श्रुते स्तात्पर्यं स्यात्। तर्हि, तया परस तान्येव मृगतृष्णिकोदकादीनि परिगृह्येत। नतथा परिगृह्यते। तस्म त्कार्यस्य जगतो मिथ्यात्वे न श्रुते स्तात्पर्य मित्येवाऽवगम्यते।

ननु, वाचारम्भणवाक्या न्मिथ्यात्वासिद्धावपि वाक्यान्त स्तत्सिध्यति। श्रु ॥ सदेव सोम्येद मग्र आसी देकमेवाऽद्वितीयम्। नेह नानास्ति किञ्चन। अथात आदेशो नेतिनेती त्यादिवाक्यै ब्रह्मणि प्रपञ्चाभावप्रतीतेरितिचेत्। उच्यते। नताव देकमेवाऽद्वितीयमित्यतो मिथ्यात्वसिद्धिः। तस्य प्रपञ्चोत्पत्तेः प्रा क्तदभावबोधकत्वेपि प्रपञ्च काले तदभावाबोधकत्वात्। तत्कालिकतदभावस्यैव मिथ्यात्वप्रयोजक त्वात्। स्वसमानाधिकरणस्वसमानकालिकात्यन्ताभावप्रतियोगित्व मिति निर्वचनात्। नापि, नेह नानास्ति किञ्चनेतिवाक्या त्तत्सिद्धिः। तस्य ब्रह्मणि प्रपञ्चाभावाबोधकत्वात्। तेन ब्रह्मभेदाभावस्यैव बोधनात्। तथाहि-सू ॥ नस्थानतोपि परस्योभयलिङ्गं सर्वत्रही त्यत्र ब्रह्मणि स्वतो वा स्थानतोवा, विरुद्धरूपद्वयं नास्ति। सर्वत्र तदेवैकंब्रह्म नह्येतस्मि न्विरुद्धरूपद्वयं सम्भवती त्युक्त्वा, अस्तु तर्हि प्रत्युपाधि ब्रह्म भिन्नं नैकमेव। अतो रूपद्वयं सम्भवती त्याशङ्क्य प्रत्युपाध्यभेदस्यैव श्रुत्या प्रतिपादनात् न ब्रह्मभेद इत्युक्तम्। सू ॥ अपिचैव मेक इति।

तस्यार्थ स्तैरेवैव मुक्तः । अपिचैके शाखिनः, एवं भेददर्शननिन्दापूर्वक मभेदमेव ब्रह्मण आमनन्ति । यदेवेह तदमुत्र यदमुत्र तदन्विह। मृत्यो स्स मृत्यु माप्नोति यइह नानेव पश्यति । मनसैवेद माप्तव्यम् । नेह नानास्ति किञ्चनेति । तथाचाऽस्य ब्रह्मणि प्रपञ्चनिषेधकत्वाभावा न्नानेन मिथ्यात्वसिद्धिः ।

नापि, नेतिनेतीतिवाक्येन तत्सिद्धिः । तस्यापि ब्रह्मणो मूर्ता मूर्तात्मकप्रपञ्चाभिन्नत्वप्रतिपादकत्वेन तन्मिथ्यात्वप्रतिपादकत्वाभावात् । तथाहि, प्रकृतैतावत्त्वंहि प्रतिषेधति ततो ब्रवीतिच भूयइति प्रकृत्य द्वेवाव ब्रह्मणो रूपइति ब्रह्मणो यदेतावत्त्वं मूर्तामूर्ततावन्मात्रत्वं वावेत्यस्य एवका रार्थत्वात् । त न्निषेधति, नेतिनेतीतिश्रुतिः मूर्तामूर्ततावन्मात्रमेव नभ वति । किन्तु, ततोपि मूर्तामूर्तादपि भूयः बहुतरं महत्तरं ब्रवीति नह्येतस्मादिति वाक्यम् । तस्याऽय मर्थः। नेह नानेत्यादिष्टा देतस्मा द्ब्रह्मणः अन्य त्परं नास्ति । इदमेव सर्वस्मा त्पर मिति । तथाचानेन वाक्येन मूर्तामूर्तप्रपञ्चस्य ब्रह्मणश्च अत्यन्ताभेदएव प्रतिपाद्यतइति गम्यते । तस्मा दप्रामाणिकमेव मिथ्यात्वम् ।

किञ्च, यदि कारणव्यतिरेकेण कार्याभावोऽनन्यत्वशब्दार्थः ब्रह्मव्यतिरेकेण प्रपञ्चाभावोऽभिप्रेत स्तर्हि पूर्वापरविरोध आपद्येत ।

तथाहि, तत्र विज्ञानवादिना विज्ञानव्यतिरिक्तो बाह्योर्थो नास्ति। सत्यपि बाह्येऽर्थे बुध्यारोह मन्तरेण प्रमाणादिव्यवहारासम्भवात्। बुद्ध्यारूढेन रूपेणाऽन्तस्थएव प्रमाणादिव्यवहार स्सर्व उपपद्यते । नहि बाह्योर्थ स्सम्भवति । सहि बाह्योर्थः परमाणवो वा स्यु स्तत्समूहावा स्तंभादयः । नताव त्परमाणव स्तंभु स्थूलादिप्रतिभासानुपपत्तेः ।

परमाण्ववभासज्ञानापत्तेश्च। नापि तत्समूहा स्तेषां परमाणुभ्योऽन्य नन्यत्वाभ्यां दुर्निरूपत्वात्। एवं जात्यादीनाम प्यभावएव।

अपिच, अनुभवमात्रेण साधारणात्मनो ज्ञानस्य जायमान योऽयं प्रतिविषयं पक्षपात स्तम्भज्ञानं, कुड्यज्ञान मित्यादिना सर्व गतं विशेष मन्तरेण नोपपद्यतइ त्यवश्य मभ्युपगन्तव्यम्। अङ्गीकृ तस्मिन् विषयाकारस्य ज्ञानेनैवाऽवरुद्धत्वा दपार्थिका बहिरर्थकल्पन स्वप्नादिव चेदं द्रष्टव्यम्। यथाहि, स्वप्नमायामरीच्युदकगन्धर्व रादिप्रत्यया विनैव बाह्यार्थेन ग्राहका भवन्ति।

एवञ्च, जागरितगोचराअपि प्रत्यया स्तंभादिविषया भ महॅन्ती त्यवगम्यते, प्रत्ययत्वाविशेषात्। कथं पुन रसति बाह्य प्रत्ययवैचित्र्य मुपपद्यते। वासनावैचित्र्या दित्याह। अनादौहि सं बीजाङ्कुरव द्विज्ञानानां वासनानांचाऽन्योन्यनिमित्तनैमित्तिकभावेन वैचि न विप्रतिषिध्यते। अपिचाऽन्वयव्यतिरेकाभ्यां वासनानिमित्तमेव इ .वैचित्र्यमि त्यवगम्यते। स्वप्नादि ष्वन्तरेणा प्यर्थं वासनानिमित्तस्य इ वैचित्र्य स्योभाभ्या मभ्युपगम्यमानत्वात्। तस्मा द प्यभावो बाह्य स्येति। एवंप्राप्ते ब्रूमः। सू॥ नाभाव उपलब्धेः॥ इति, स्वभावो बाह्यार्थस्याऽध्यवसातुं शक्यते। कस्मात् उपलब्धेः। उपल तेहि प्रतिप्रत्ययं बाह्योर्थः। स्तम्भः, कुड्यम्, घटः, पटइति। पलभ्यमानस्यैवाऽभावो भवितु मर्हति। यथा कश्चि द्भुञ्जानो भुजिसा यां तृप्तौ स्वय मनुभूयमानाया मेवं ब्रूया न्नाहं भुञ्जे नवा तृप्यामि तद्व दिन्द्रियसन्निकर्षेण स्वय मुपलभमानएव बाह्य मर्थं नाह मुपल नच सोऽस्तीति ब्रुव न्कथ मुपादेयवचन स्स्यात्।

ननु, नाह मेवं ब्रवीमि नकिञ्चि दर्थ मुपलभइति। किन्तूपलब्धिव्यतिरिक्तं नोपलभइति ब्रवीमि। बाढ मेवं ब्रवीपि। निरङ्कुशत्वा त्ते तुण्डस्य। नतु युक्त्युपेतं ब्रवीपि। यत उपलब्धिव्यतिरेकोपि बला दर्थस्याऽवगंतव्य उपलब्धेरेव। नहि कश्चि दुपलब्धिमेव स्तंभः कुड्यञ्च त्युपलभते। उपलब्धिविपयत्वेनैवतु स्तंभकुड्यादीन् सर्वे लौकिका उपलभंते।

ननु, बाह्यस्यार्थस्याऽसंभव उक्तः। न। प्रमाणप्रवृत्यप्रवृत्ति पूर्वकौहि संभवासंभवौ। नतु संभवासंभवपूर्विके प्रमाणप्रवृत्यप्रवृत्ती। यद्धि प्रत्यक्षादीना मन्यतमेनापि प्रमाणेन उपलभ्यते। तत्संभवति। यत्तु न केनचि दप्युपलभ्यते। त न्नसंभवति। इहतु यथास्वं सर्वै रेव प्रमाणैः बाह्योर्थ उपलभ्यमानः कथं व्यतिरेकाव्यतिरेकादिविकल्पै र्नसंभवती त्युच्यते। उपलब्धेरेव। नच ज्ञानस्य विपयसारूप्याद्विपया भावो भवति। असति विपये विपयसारूप्यानुपपत्तेः। बहिरुपलब्धेश्च विपयस्य। यदुक्तं स्वप्नादिप्रत्ययवत् जागरितप्रत्ययाअपि विनैव बाह्येनार्थेन भवेयुः प्रत्ययत्वाविशेपादिति। तत्राह। सू ॥वैधर्म्याच्च नस्वप्नादिवत्॥ न स्वप्नवत् बाह्यप्रत्यया भवितु मर्हंति। कस्मा द्वैधर्म्यात्। किंपुन र्वैधर्म्यं। बाधाबाधाविति ब्रूमः। बाध्यतेहि स्वप्नोपलब्धं वस्तु प्रति बुद्धस्य। मिथ्या मयोपलब्धो महाजनसमागमो। नह्यस्ति महाजनसमागमः। निद्राग्लानन्तु मे मनो बभूव। तेनैपा भ्रांति रुद्बभूवेति। एवं मायादि प्वपि भवति यथायथं बाधः। नैवं जागरितोपलब्धं स्तंभादिकं कस्यांचिद प्यवस्थायां बाध्यते।

अपिच, स्मृति रेपा यत्स्वप्नदर्शनं। उपलब्धिस्तु जागरि

दर्शनं । स्मृत्युपलब्ध्योश्च प्रत्यक्ष मंतरं स्वय मनुभूयते । अर्थविप्र
संप्रयोगात्मकं इष्टं पुत्रं स्मरामि । नोपलभे उपलब्धु मिच्छामीति
तत्त्वैवंसति नशक्यते वक्तुं मिथ्या जागरितोपलब्धिः उपलब्धित्वात्
स्वप्नोपलब्धिवदिति । उभयो रंतरं स्वय मनुभवता । नच स्वानु
पलापः प्राज्ञमानिभि र्युक्तः कर्तुं । अपिच, यदि जागरितोपल
भ्रमः । तर्हि, नैव सा स्वप्नोपलब्धे र्बाधिका स्यात् । नहि भ्रां
र्बाधिका भवति । तदेवं विज्ञानव्यतिरिक्तं बाह्य मर्थं प्रतिष्ठापयता
कारेण ब्रह्मव्यतिरिक्तो बाह्यार्थोऽबाधितः प्रतिष्ठापितएव। नच तत्राऽ
तत्वं व्यावहारिकसत्यत्वमेवोक्तमितिवाच्यं । विज्ञानवादिभिरपि बाह्यार्थ
संवृतिसत्यत्वाभ्युपगमात् । व्यावहारिकसत्यत्वस्यैव संवृतिसत्यत्वशब्दे
तै र्व्यवहारात् । ततश्च तन्मतनिराकरणपूर्वक मबाधितार्थ म्प्रतिष्ठापय
पारमार्थिकसत्यत्वमेव प्रतिष्ठापितं । किंच किमन्यत्वादिना वक्तु म
क्यत्वात् बाधितत्वं किंवा बाधात् । नाद्यः नहि निर्वचनाधीनं वस्तु
तत्वावधारणं । किंतु मानाधीनं पुरुषाणा मल्पबुद्धित्वेन वस्तूना मद्भुत
नवा अशक्यनिर्वचनत्वेपि प्रमाणसिद्धतया प्रतिमुखवर्तिवैलक्षण्यवत् सा
न्यवच्च पारमार्थिकत्वोपपत्तेः । नान्त्यः तदनुपलब्धेः । नच
त्वस्य सर्वमात्मैवाऽभूदिति वाक्यं बाधक मिति वाच्यं । नहीदं वाक्यं
विद्यादशायां प्रपंचाभावं बोधयति । तथास त्यन्येषा न्तदनुपलब्धि
प्रसंगात् । नचाऽस्येति पुरुषविशेषापेक्षयाऽभावं बोधयति । तथाहि
प्रज्ञानघन एवैतेभ्यो भूतेभ्य स्समुत्थाय तान्येवाऽनुविनश्यति । न प्रेत्य
संज्ञाऽस्ती त्युपश्रुतवत्या "अत्रैव माभगवा नमूमुहत् । नप्रेत्य संज्ञाऽस्तीति
मोक्षभागिन आत्मनो विनाशो नयुक्तइति पृष्टो याज्ञवल्क्य आह ।न

अरे अहं मोहं ब्रवीमि। अविनाशीवाऽरे अयमात्माऽनुच्छित्तिधर्मेति। उच्छित्ति ध्वंसः तत्प्रतियोगी नभवतीत्यर्थः। कथं तर्ह्यनुविनश्यति। नप्रेत्य संज्ञास्ती त्युक्तं। अतआह। मात्रासंसर्ग स्त्वस्य भवतीति। अस्या ऽर्थः मात्राभिः भूतमात्राभिः प्रज्ञामात्राभिश्च सविपयै रिंद्रियैः स्वस्थाना त्प्रच्युतै स्सहाऽस्या त्मनो हृदय न्तेन ब्रह्मणा संसर्गो नीरक्षीर वदेकी भावो भवति। तथाहि श्रूयते। वाङ्मनसि संपद्यते। मनः प्राणे प्राण स्तेजसि तेजः परस्यां देवतायां। एव मात्मानं सर्वे प्राणा अभि समायांति ताएता स्तेजोमात्रा स्समभ्याददानो हृदयमेवाऽन्ववक्रामति। यत्रैव चाक्षुपः पुरुपः परा न्पर्यावर्तते। अथ रूपज्ञो भवति एकीभवति नपश्यतीत्याहुरिति। वक्ष्यतिच सूत्रकारः। वाङ्मनसि दर्शना च्छब्दाच्चे त्यारभ्य। अविभागो वचना दित्यंतेन। ग्राहकेंद्रियसंपत्त्याच ग्राह्यविपय संपत्तिरिति द्रष्टव्या। एवं सर्वेषां स्पर्शानां त्व गेकायतनं। तावा एकाद शैव भूतमात्रा अधिप्रज्ञं। दश प्रज्ञामात्रा अधिभूतं यद्धि भूतमात्रा नस्यु र्न प्रत्यभिज्ञामात्रा स्युः। यद्यधिप्रज्ञामात्रा स्यु र्भूतमात्राः। नह्यन्यतरतो रूपं किंचन सिद्ध्येत्। नोएत न्नाना। तद्यथा रथस्यारेपु नेमिरर्पिता। नाभा वरा अर्पिताः। एवमेवैता भूतमात्राः प्रज्ञामात्रा स्वर्पिताः। प्रज्ञामात्राः प्राणेऽर्पिता इति। भूतमात्राशब्दोदितानां विपयाणां प्रज्ञामात्राशब्दोदि ताना मिंद्रियाणांच ग्राह्यग्राहकत्वेनाऽन्योन्यापेक्षितत्वस्य इन्द्रियेपु विप याणा मर्पितत्वस्यच प्रतिपादनेन ग्राहकेंद्रियसंपत्त्या ग्राह्यविपयसंपत्ते र प्यावश्यकत्वात्। अतएव सुपुप्तावपि यथा सुपुप्तः स्वप्नं नकंचन पश्य त्यथाऽस्मि न्प्राणए वैकधा भवति। तदैनं वा क्सर्वै र्नामभि स्सहाप्येतीत्यादिना ग्राहकेन्द्रियसंपत्त्या ग्राह्यविपयसंपत्तिर प्युच्यते।

यदा विषयस्य संपत्ति स्तदा ग्राह्यत्वाभावएव। नह्यस्य स्वरूं हार्दब्रह्मणि संपत्ति र्नाशोवा ? अन्येषां विषयानुपलंभप्रसंगात् श्रु ॥ तौह सुप्तं पुरुष माजग्मतुः । सू ॥ तदभावो नाडं तच्छ्रुते रात्मनिचेति श्रुतिसूत्राभ्यां शरीरादिसद्भावप्रतिपादनाच उक्तंच कल्पतरौ देवताधिकरणे, प्रतीत्यप्रतीतिभ्यां जाग्रत्सुपुप्त्यो स्सं लयाभिधान मिति । अयमेव मात्रासंसर्गोऽदर्शननिमित्तत्वा द्विनाशइ त्यु र्यते । अस्यच ज्ञानाभावनिमित्तत्व मन्वयव्यतिरेकाभ्यां दर्शयति यत्रहि द्वैतमिव भवति तदितर इतरं पश्यति। यत्र त्वस्य सर्व मात्मैव भूत् त त्केन कं पश्येत् । यत्र जागरितादौ द्वैतमिव भवति इवश एवकारार्थः। अण्व्यइ वेमा धाना इतिव द्वैतमेव भवति। इवशब्द उप र्थोवा यथा द्वैतं घटपटादिविविक्तं भवति । एव मिंद्रियाण्यपि ब हृदया न्निष्कम्य स्वस्वायतनगतानि तदा कर्मकरणानां विभक्तत्वा दि इतरं पश्यति । यत्र मरणावस्थायां सर्वं मात्मैवाऽभूत् । पूर्वो मार्गेण सर्वोपादानतया सर्वाभिन्नेन ब्रह्मणा उपहृतकरणस्य जीव एकत्वापत्त्या तदा विभागाभावात् केन कं पश्येत् । अतएव सुषु दावपि कर्तृत्वादिविभागाभावात् ज्ञानाभाव श्श्रूयते । नतु तद्वि मस्ति । ततोऽन्य द्विभक्तं य त्पश्येदित्यादि । तस्मा त्सुपुप्तौ ज्ञा भाव स्सिद्धएव। तदिदं सूत्रकारे णोक्तं सू॥ स्वाप्ययसंपत्त्यो रन्यतरा माविष्कृतंहीति । एवंच बाधकाभावा त्प्रपंचः पारमार्थिकएव ।

किंच, मिथ्यात्वं सूत्रविरुद्धं । नैकस्मि न्नसंभवादि त्येक न्वस्तुनि अस्तित्वनास्तित्वादीनां ब्रह्मणि रूपादे स्तदभावस्यचाऽसं भिधानेन मिथ्यात्वस्य कंठतएव निराकरणात्। अपिच असत्य मप्रति

जग दाहु रनीश्वरं । एतां बुद्धि मवष्टभ्य नष्टात्मानोऽल्पबुद्धय इत्यादि स्मृतिविरोधाच्च ।

नच, सद्विविक्तत्ववादिनो मम जग त्यसद्वैलक्षण्यांगीकारेण तत्प्रतिपादकस्मृतिविरोधो नास्तीति वाच्यं । सत्कार्यवादस्य सूत्रकृत्सम्म तत्वेन त मनादृत्य सद्विविविक्तत्व मभ्युपगच्छत स्तव स्मृतिविरोधस्य दुरुद्धरत्वात् ।

इदंच, नाभाव उपलब्धेः । वैधर्म्याच्च नस्वप्नादिवदिति । सूत्र द्वयेन जगतः पारमार्थिकसत्यत्वबोधनेन तद्विरोधाच्च ।

नचानेन शून्यवादनिरासार्थेन असद्वैलक्षण्यमात्रप्रतिपादना न्न वि रोधइति शक्यं। अर्थक्रियाकारित्वलक्षणस्य असद्वैलक्षण्यस्य शून्यवादिम तेपि सत्वेन तन्मतनिरासार्थत्वानुपपत्तेः । निषेधाप्रतियोगित्वरूपस्याऽसद्वै लक्षण्यस्य त्वया प्यनंगीकारात् असद्वैलक्षण्यमात्रस्य साधने सूत्रे स्वप्नवैलक्षण्योक्त्ययोगाच्च । व्यावहारिकसत्यत्वमात्रेण स्वप्नवैलक्षण्यस्य त्वया प्यंगीकारात् , असद्वैलक्षण्यमात्रस्य तन्मतेपि सत्वाच्च । तदुक्तं बौद्धैः । " द्वे सत्वे समुपाश्रित्य बौद्धानां धर्मदेशनाइति तस्मा ज्जगतः पारमार्थिकत्व मव्याहतं ।

नन्वत्रोक्त मद्वैतसिद्धिकारैः, सूत्रार्थानवबोधात् । तथाहि, सद्रूपा द्ब्रह्मणो जगत्सर्गं वदत स्समन्वयस्य सर्व मसदि त्यनुमानेन विरोधसंदेहे नस न्नास न्नसदसत् । नचानुभयतत्वकं । विमतं तर्कपीड्यत्वा न्मरीचिषु यथोदकमिति । ब्रह्मसाधारण्या न्निस्तत्वतायां प्राप्तायां सूत्रेण परिहारः । सतो ब्रह्मणो नाभावः नशून्यत्वं । उपलब्धेः सत्वेन प्रमाणा त्प्रतीतेः । तथाच, किंचित्परमार्थस द्वश्यं शून्यवादिनापि

स्वीकार्यं । अन्यथा बाधस्य निरवधिकत्वप्रसंगा दिति सूत्रार्थः । न न प्रपंचमिथ्यात्वविरोधीतिचे न्न । नाभावइति सूत्रस्य ब्रह्माभावप्रतिषेध परत्वे नैरर्थक्यात् । तथाच ब्रह्मणोऽभावे तद्विषयजिज्ञासाया अयोगे ब्रह्मजिज्ञासारंभेणैव ब्रह्माभावशंकायाः परिहारेण पुन स्तदभावस्याप्रति षेध्यत्वात् । किंच, उपलब्धिपदस्याऽनुभववाचितया ब्रह्मणोनुभव सिद्धत्वेन तस्य सद्भावप्रतिपादने तत्साक्षात्कारसाधकानां श्रवणादीनां वैयर्थ्यप्रसंगाच्च । बाह्यार्थाभावप्रतिषेधपरस्वीयभाष्यविरोधाच्च ।

## परिणामवादपरिष्कारः

ननु, ब्रह्मणः प्रपंचंप्रति विवर्तोपादानत्वाभ्युपगमेन मृगतृष्णादे रिव कार्यस्याऽवस्तुत्व मवार्यमितिचे न्न । परिणामा दित्याचार्येण परिणा म्युपादानत्वस्यैव सूत्रितत्वेन विवर्ताभ्युपगमस्य सूत्रविरुद्धत्वात् । नच पूर्वरूपपरित्यागपूर्वकरूपांतरापत्तेः परिणामलक्षणतया परिणामित्वाभ्यु गमे ब्रह्मणो विकारित्वं प्रसज्येतेति शङ्क्यं । पूर्वरूपस्य नाशे निराश्रयस्य परिणामस्याऽसंभवेन पूर्वरूपपरित्यागेत्यादिलक्षणस्य दुष्टत्वात् । किंतु स्थितएव पूर्वरूपे तद्भिन्नव्यवहारयोग्यकार्यांतरोत्पत्तेरेव परिणामत्वात् । तदुक्तं । आत्मनि चैवंविचित्राश्चहीति । यथा जीवात्मनि जीवस्वरूपानुप मर्देनैव विचित्रा बुद्धीच्छादयः परिणामविशेषा उत्पद्यन्ते । यथाच मृत्त्वादिषु, घटपटादयः । इयांस्तु विशेषः । यत्रोपादाने उत्पत्स्यमानविरो धिकार्यांतरं वर्तते । तत्र तदुपमर्देनैव कार्यांतरोत्पत्तिः । यथा पिंडरूपो पमर्देनैव घटोत्पत्तिः । यथाच तंतुषु पटाभावोपमर्देनैव पटोत्पत्तिः अंकुरादाव पि न बीजादिक मुपादानं कार्यानन्वयित्वात् । कार्यान्वयिनए वांश

दानत्वाच । तथाच , श्रुतिः एतस्यवै सोम्यैषोऽणिम्न एव महा न्न्यग्रोध स्तिष्ठतीति । उक्तं सूत्रकृता तर्कपादे सू ॥नासतो दृष्टत्वादिति । विवृतंच परैरपि तथैव । एवं ब्रह्मणोपि निरवयवस्य स्वरूपानुपमर्देनैव जगत्परिणाम उप पद्यते । विपक्षेच बाधक मुक्तं । स्वपक्षदोषाच्चेति प्रधानस्य सत्वादीनांच कात्स्न्येन परिणामे स्वरूपनाशापत्तिः । एकदेशपरिणामाभ्युपगमे निर वयवत्वाभ्युपगमव्याकोप इति सोऽय मविद्यायामपि समानो दोषः । अविद्यायाअपि प्रधानतुल्यत्वात् । नचाऽविद्यायां विचित्रशक्तियोगा त्परि णाम स्संभवति , न ब्रह्मणइतिवाच्यं । पराऽस्य शक्ति र्विविधैव श्रूयत इत्यादिश्रुत्या सर्वोपेताच तद्दर्शनादिति सूत्रेणच ब्रह्मणएव विचित्रशक्ति प्रतिपादनात् । अविद्यायां तादृशशक्तौच प्रमाणाभावाच । अभावाधि करणे स्थिरस्वभावानामेव सुवर्णादीनां रुचकादिकार्यकारणभावदर्शनात् । येष्वपि बीजादिषु स्वरूपोपमर्दो लक्ष्यते । तेष्वपि नासा वुपमृद्यमाना पूर्वावस्था उत्तरावस्थायाः कारण मभ्युपगम्यते । अनुपमृद्यमानानामेवाऽ नुयायिनां बीजाद्यवयवाना मंकुरादिकार्यकारणभावाभ्युपगमादिति परै र प्युपादानानुपमर्देन कार्योत्पत्त्यभ्युपगमेन परिणाम्युपादाने विकारित्वस्याऽ प्राप्तेः । परिणाम्युपादानत्वाभ्युपगमसिद्धेश्च । सूत्रकारः परिणामप्रक्रियां चाश्रयतीति परैरेव परिणामस्य कण्ठतएव सूत्रकारसम्मतत्वाभिधानात् ।

एवंच , जगतो ब्रह्मपरिणामरूपत्वस्य श्रुतिसूत्रसम्मतत्वेन अविद्या परिणमते । ब्रह्म विवर्तत इत्यभिधानं सूत्रविरुद्ध मिति स्फुटं ।

ननु , आरंभणाधिकरणे ईश्वरस्याऽत्मभूतइवाऽविद्याकल्पिते, नामरूपे तत्वान्यत्वाभ्या मनिर्वचनीय इति भाष्योक्त्या नामरूपात्मकस्य जगतोऽनिर्वचनीयत्वं सिध्यतीतिचे न्न । अनिर्वचनीयपदार्थस्याऽसिद्धेः

तथाच, तस्य सद्भिन्नत्वा दसत्वं असद्भिन्नत्वा त्सत्व मापतती त्युभयरू मेवाऽऽयातीति, तयो र्विरोधात्। धर्मद्वयानाक्रांतस्य लोकव्यव भावाच्च। तदुक्तं सांख्यसूत्रे " नासतो ख्याति नृशृंगवत्। नानिर्व यस्य तदभावात्। ना प्यन्यथाख्यातिः स्ववचोव्याघाता दिति।

ननु, नाऽनिर्वचनीयस्य ख्यातिरिति सांख्योक्तं तत्खंड चाद्यैकदेशिमतसिद्धस्य नतूक्तानिर्वचनीयवादस्येति मंजूषाकारै मितिचे न्न। विनिगमनाविरहेण सांख्योक्तखंडनस्याऽनिर्वचनीय सामान्यविषयत्वानपायात्।

नच, जगत्यस्माभि रारोपितसत्तांगीकारेण बौद्धेन तदनंगीकार विशेषो विद्यते। अतएव एतेनाऽसतोभाने बौद्धमतप्रवेश इ त्यपास्तं तेन तत्रारोपितसत्वस्या प्यनंगीकारादिति मंजूषाकारै रुक्तमिति शं आरोपितसत्तांगीकारतदनंगीकारयो र्विशेषस्या प्यनिर्वचनीयत्वात्। त त्समुदायाधिकरणं, यदाहि लोकप्रसिद्धः पदार्थः परीक्षकै र्न परिगृह्य तदा स्वपक्षसिद्धिः परपक्षदोषोवा उभयम प्युच्यमानं परीक्षकाणा म नश्च यथार्थत्वेन न बुद्धिसंतान मारोहति। एवमे वैषोर्थइति निश्चितं य त्तं वक्तव्यं। ततोऽन्य दुच्यमानं बहुप्रलापित्व मात्मनः केवलं प्रख्याप दिति परोक्त मात्मनीनमपि पक्ष मधिक्षिपत्येव। अनिर्वचनीयत्वस् प्यनिर्धारितरूपत्वात्।

ननु, परमार्थसारे, त्रिगुणा चैतन्यात्मनि सर्वगतेऽवस्थितेऽखिल धारे। कुरुते सृष्टि मविद्या सर्वात्मा स्पृश्यते तथा नात्मा। सृष्टिं तद्र मित्यर्थः। तद प्युक्तं तत्रैव। रज्ज्वां भुजंगहेतो प्रभवविनाशौ य न स्तः। जगदुत्पत्तिविनाशे नच कारण मस्ति तद्व दिह ॥इति॥ भुजंगहे

भुजंगभ्रमहेतौ नच कारणमस्तीति। किं त्वन्यथाभानात्मिकाऽविद्यैवे त्यर्थः। वस्तुतो मृदि विकारो भ्रमएव । ननु कोपि पदार्थइति तदनन्यत्व मिति सूत्रे णोक्तमिति मंजूषाकारै ब्रह्मणो जगद्रूपभ्रमाधिष्ठानत्वमेव सूचित मतः कार्यस्य जगतो मिथ्यात्वं नातिवर्तत इतिचेन्न । ईक्षतेर्नाशब्द मिति प्रधानस्य जगत्कारणत्वं निराकुर्वता सूत्रकृता जगत्कारणत्वस्य भ्रमाधिष्ठानरूपत्वानभिमतत्वद्योतनात्। अन्यथा, स्थाणोरपि भ्रमाधिष्ठान त्वसंभवेन प्रधानकारणत्वनिरासो न युज्येत। तस्मा न्न मिथ्या जग दित्येव युक्तं ।

नच, आदावन्तेच यन्नास्ति वर्तमानेपि तत्तथा । इतियुक्त्या जगतोऽसत्त्वं सिध्यतीति चोद्यम्, अस्याः कुयुक्तेः बौद्धसमयैक सिद्धत्वेनाऽनुपादेयत्वात् । सू ॥ सत्त्वाच्चा वरस्येति सत्कार्यवाद मव लंबता सूत्रकृता निर्धूतत्वाच्च। अतएवात्र परैरपि, यथाच कारणं ब्रह्म त्रिषु कालेषु सत्त्वं नव्यभिचरतीत्येवं कार्यमपिजगत्त्रिषु कालेषु सत्त्वं नव्यभिचरतीति विवृतं । एतेन जग त्सत्य मित्येव सिद्धम् ।

किंच, उपादानत्वं ब्रह्माज्ञानपक्षे नसंगच्छते लक्षणाऽयोगात्।

तथाहि, अनुवृत्तं व्यावृत्त स्योपादान मित्यप्ययुक्तं गुरुत्वंप्रति रूप स्योपादानत्वप्रसंगात्। रूपंहि तेजोवन्ने ष्वनुवृत्तं। भ्रमाधिष्ठानत्व मुपा दानत्व मितिचेत् शुक्तिरूप्यंप्रति देवदत्त स्योपादानत्वप्रसंगः। सहि भ्रांति ज्ञानाश्रयः । अध्यस्ताधिष्ठानत्व मध्यस्तं प्रत्युपादानत्व मितिचेत्। अधिष्ठानशब्दस्य कोर्थः? यदधिकरणतयाऽध्यस्तं प्रतीयते। तत्तस्याऽ धिष्ठान मितिचेत् । इदं रजतमिति प्रतीतिः । नत्वस्मिन् रजतमिति । अथाऽध्यस्तं यत्सामानाधिकरण्ये प्रतीयते । त त्तस्योपादान

मितिचेत् । तर्हि पीत शंखइत्यत्र पीतिम्न शंख उपादानं न स्यात् नहि पीतिमा शंखइति सामानाधिकरण्येन प्रतीतिः । अपितु पीतिम युक्त शंखइति प्रतीतिः । द्रव्यांतरवाचिशब्दसमानाधिकरणः पीतशब्दो पीतिमगुणान्विते वर्तते पीतशंखस्य शंखांतरेण सामानाधिकरण्या युक्तं लक्ष मितिचे न्न । पीतिममात्रस्यैव बाधदर्शनात् । शंखस्याऽबाधितत्वात् तदुभयव्यतिरेकेण बाध्यशंखांतरकल्पनायोगात् । तस्मा द्यथोक्तमेव युक्त

## विशिष्टकार्यकारणभावपरिष्कारः .

---

अत्र केचित् ,सूक्ष्मचिदचिद्विशिष्टं ब्रह्म कारणं स्थूलचिदचिद्वि शिष्टं ब्रह्म कार्यमिति य दुक्तं त दसत् । एकस्यैव ब्रह्मणः कार्यकार भावायोगात् ।

नच , विशिष्टयो स्तयो स्तद्योगइति वाच्यं । चिदचिद्ब्रह्म त्रयाणां प्रत्येकं वैशिष्ट्येनवा कार्यकारणभावायोगात् । चितंप्रति चितः अचितंप्र त्यचितः । ब्रह्मप्रति ब्रह्मणः । विशिष्टंप्रति विशिष्टस्यच का कारणभावस्याऽयुक्तत्वात् ।

नच , स्थूलां श्चिदचिदादीन् प्रति सूक्ष्मचिदचिदादिकं कारणमिति वाच्यं , चिद्ब्रह्मणो स्थूलत्वसूक्ष्मत्वलक्षणविकाराभावात् ।

नच , स्थूलाचिद्वस्तुप्रति सूक्ष्माचिद्वस्तुनः कारणत्वा द्विशि प्रति विशिष्टस्य कारणत्व मिति वाच्यं । तथासति स्थूलत्वविशिष्ट चितः सूक्ष्मत्वविशिष्ट मचि त्कारणमित्येव वक्तव्ये स्थूलचिदचिद्विशिष्टंप्र

सूक्ष्मचिदचिद्विशिष्टं ब्रह्म कारणमिति वचनस्य गुरुत्वा दयुक्तत्वाचाऽ प्रामाण्यमेव ।

नच, पिंडावस्थावतो मृद्द्रव्यस्य घटावस्थावतो मृद्द्रव्यस्यच कार्यकारणभाववत् सूक्ष्मचिदचिद्विशिष्टस्य ब्रह्मण: स्थूलचिदचिद्विशिष्टस्यच ब्रह्मण: कार्यकारणभावो युज्यत इति वाच्यं । मृदद्व ब्रह्मणोऽवस्थाव त्त्वानुपपत्ते: । स्थूलत्वसूक्ष्मत्वयो रचिदवस्थाविशेषत्वेनाऽचिद्द्रव्यस्यैव कार्यकारणोभयावस्थावत्वाच्च । तस्मात् स्थूलावस्थाऽचिद्द्रव्यस्यैव सूक्ष्मा वस्थ मचिद्द्रव्यमेव कारणं नतु चितोवा ब्रह्मणोवा कार्यकारणत्वइति कथ मुच्यते ब्रह्मण: कार्यकारणभाव एकस्यैवाऽविक्रियस्य ।

नच, स्थूलाचिद्विशिष्टं ब्रह्म कार्यं सूक्ष्माचिद्विशिष्टं ब्रह्म कारण मित्युक्तेपि विशेष्यस्य बाधे सति विधिनिषेधौ विशेषण मुपसंक्रा मत इति न्यायेन ब्रह्मणो विशेष्यस्य कार्यकारणबाधेसति विशेषणयोरेव स्थूलसूक्ष्माचितो: कार्यकारणभावोपसंक्रांति रिति वाच्यं । स्थूलाचितं प्रति सूक्ष्माचित्कारण मित्येव वक्तव्ये दर्शितवक्रमार्गाश्रयणस्य वैयर्थ्याद्दुष्ट त्वाचेति, वेदांतकल्पतरुपरिमळपीठिकाया माहु: ।

त दश्राव्यं । ब्रह्मणएव कार्यकारणभावस्याऽनेकश्रुतिसूत्रसिद्ध त्वेन परकृतदूषणस्य श्रुतिसूत्रविषयत्वात् ।

तथाहि, विश्वाधिको रुद्रो महर्षि:, द्यावा पृथिवी जनयन् देव एक इत्यादिना कारणत्वस्य श्रु ॥ सर्वोवै रुद्र:, ब्रह्म वनं ब्रह्मस वृक्ष आसीदित्यादिना कार्यरूपत्वस्यच श्रवणात् सू ॥ साक्षा च्चोभयाम्नाना दिति सूत्रेण परमेशितु रुभयरूपत्वस्य सिद्धांतितत्वाच ।

किंच, श्रु ॥ सोऽकामयत बहुस्यां प्रजायेयेति तदा

त्मानग्ं स्वय मकुरुतेतिच बहुभवनसंकल्पपूर्वकं स्वस्यैव जगदाकारे कृते राम्नातत्वेन, अस्यार्थस्य सू ॥ आत्मकृतेरिति सूत्रेण राद्धान्तितत्वा ब्रह्मण एकस्यैव कार्यकारणरूपत्वावधारणेन तद्विरुद्धशुष्कतर्कस्य वैदि जनापरिग्राह्यत्वं स्फुटमेव । अथ, चिदचिद्ब्रह्मणां त्रयाणां प्रत्ये वैशिष्ट्येनवा कार्यकारणभावो नयुक्त इति यदुक्तं तदसारं । विशि स्यैव ब्रह्मण: कार्यकारणभावस्य श्रुतिसूत्रसिद्धत्वेन प्रत्येक मनभ्यु गमात् । ततश्च यदपि स्थूलसूक्ष्मावस्थयो र्विक्रियारूपत्वेन तयो व्यसंभवा दित्युक्तं । तदपेशलं सूत्रविरुद्धत्वात् ।

तथाच, सूत्रं ॥ लोकवत्तु लीलाकैवल्यमिति सूत्रेण ब्रह्म लीलावस्था सृष्टिरिति केवलावस्था लयइति सू ॥ पटवच्चेति सूत्रे ब्रह्मण: संकोचविकासावस्थयो र्लयसर्गात्मकत्वेन ब्रह्म व्यवस्थाविशे भ्युपगमात् ।

## शक्त्युपादानत्वपरिष्कार:.

---

ननु, कथं भवत्पक्षे सविकारत्वं निर्विकारत्वं चेश्वर स्योपपद्यतइ चेत् । उच्यते, शरीरभूतप्रकृतिद्वारको विकारान्वय: । निर्विकारत्वंऽ व्यवधानेन घटतइ त्यविरोध: ।

ननु । यद्येव मुपादानत्व ममुख्यं स्यात् । देवादिना रूपाभिमानानुगुणज्ञानप्रसरस्य महदाद्यवस्थायाश्च ईश्वरगतत्वाभावात भाव्यवस्थाविशेषवत: प्रागस्थायोगो ह्युपादानत्वं इतिचेत् । शृणु चिदचिच्छरीरकं ब्रह्म महदादिकार्यंप्रति मुख्योपादानं उपादानल

योगित्वात्। मकुटंप्रति कनकवत्। नन्वसिद्धो हेतुः महदाद्यवस्थानां ब्रह्म गतत्वाभावात्। न। ब्रह्मण श्चिदचिच्छरीरकतया प्रकृते ब्रह्मस्वरूपांतर्गत त्वात्। प्रकृत्यवस्थानां ब्रह्मावस्थात्वात्। नहि विशेष्यमात्रं कस्यचि त्स्वरूपं विशिष्टस्य वस्तुनो विशिष्टमेवहि; स्वरूपं। नहि घटस्य मृण्मात्रं स्वरूपं। किंतु घटत्वविशिष्टमेव।

ननु, यदि विशेषणमपि स्वरूपांतर्भूतं। तर्हि दंडादय स्संयोगादयश्च स्वरूपं स्युः। न। यावद्विशेष्यभाविना मपृथक्सिद्धप्रकाराणा मेव स्वरूपांतर्भावात्।

किंच, घटादिवस्तुन उदकाहरणादितत्तदसाधारणकार्ययोग्यमेव स्वरूपं। न मृण्मात्रं। पिंडेष्टकानामपि घटस्वरूपत्वप्रसंगात्। घट स्योदकाहरणंप्रति योग्यतानाम अच्छिद्रघटत्वमेव तस्मा दविरोधः। अत्रेद मवधेयं। काश्चन श्रुतयः। अचिद्वस्तुन श्चिद्वस्तुनः परस्यच ब्रह्मणो भोग्यत्वेन भोक्तृत्वेन चेशितृत्वेनच स्वरूपं विवेचयामासुः।

तथाहि, अस्मा न्मायी सृजते विश्वमेत त्तस्मिं श्चाऽन्यो मायया सन्निरुद्धः। मायांतु प्रकृतिं विद्या न्मयिनंतु महेश्वरं। क्षरं प्रधान ममृताक्षरगं हरः। क्षरात्माना वीशते देव एकः। स कारणं करणाधि पाधिपो नचाऽस्य कश्चि ज्जनिता नचाधिपः। करणाधिपस्य जीवस्या धिप इत्यर्थः। प्रधानक्षेत्रज्ञपति र्गुणेशः। पतिं विश्वस्यात्मेश्वरगं। ज्ञाज्ञौ द्वा वजावीशानीशौ। नित्यो नित्यानां चेतन श्चेतनाना मेको बहूनां यो विदधाति कामान्। भोक्ता भोग्यं प्रेरितारंच मत्वा जुष्ट स्तत स्तेनाऽ मृतत्व मेति। अजा मेकां लोहितशुक्लकृष्णां बह्वीः प्रजा जनयंतीगं सरूपाः अजो ह्येको जुषमाणोऽनुशेते जहा त्येनां भुक्तभोगा मजोन्यः।

समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा
त्यन्य मीश मस्य महिमान मिति वीतशोकः । इत्याद्याः । स्मृति
प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि। ममयोनि र्महद्ब्रह्म तस्मिन्
दधा म्यहं । संभव स्सर्वभूतानां ततो भवति भारतेति । जगद्योनि
महद्ब्रह्म प्रकृत्याख्यं भूतसूक्ष्म मचिद्वस्तु यत् । तस्मिं श्चेतनाख्यं
यत्संयोजयामि ततो मत्कृतचिदचित्संसर्गा द्देवादिस्थावरांताना मचि
श्राणां सर्वभूतानां संभवो भवतीत्यर्थः ।

एवं । भोक्तृभोग्यरूपेणाऽवस्थितयो स्सर्वावस्थावस्थितयो श्चि
चितोः परमेश्वरशरीरतया तन्नियम्यत्वेन तदपृथक्स्थितिं परमेश्व
चात्मत्व माहुः कतिचि च्छ्रुतयः ।

तथाच, श्रु॥ यः पृथिव्या न्तिष्ठन् यस्य पृथिवी शरीर मित्यादि
यस्यात्मा शरीरं य आत्मान मंतर्यमयतीति । अन्तः प्रविष्ट श्शा
जनानां सर्वात्मेतिच । एवं सर्वावस्थावस्थितचिदचिद्वस्तुशरीर
तत्प्रकारः परमेश्वरएव कार्यावस्थकारणावस्थजगद्रूपेणाऽवस्थित इ
मर्थं ज्ञापयितुं कार्यावस्थं कारणावस्थंच जगत् सएवे त्याहुः । य
श्रु ॥ सदेव सोम्येद मग्र आसी देकमेवाऽद्वितीयं । त दैक्षत बहु स्
प्रजायेयेति । तत्तेजोऽसृजतेत्यारभ्य सन्मूला स्सोम्येमा स्सर्वाः प्र
स्सदायतना स्सत्प्रतिष्ठाः । ऐतदात्म्य मिदग्ं सर्वं तत्सत्यं स आ
त त्त्व मसि श्वेतकेतो इति । तथा सोऽकामयत बहुस्यां प्रजायेयेति
सतपोऽतप्यत सतप स्तप्त्वा इदग्ं सर्व मसृजतेत्यारभ्य सत्यंचाऽनृतं
सत्य मभवत् । सर्वं खल्विदं ब्रह्म । सर्वो ह्येष रुद्र इत्याद्याः ।

नन्, कार्यकारणयो रैक्यप्रतिपादना देकविज्ञानेन सर्ववि

प्रतिज्ञाना त्सामानाधिकरण्याच्च अद्वैतप्रतीति स्त्रिधा श्रूयते । तत्कथ मुप पद्यतइतिचेत् । उच्यते । हंताहमिमा स्तिस्रो देवता अनेन जीवे नात्मनाऽ नुप्रविश्य नामरूपे व्याकरवाणीति छांदोग्ये । त त्सृष्ट्वा तदेवाऽनुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाऽभवत् विज्ञानंचाविज्ञानंच सत्यंचाऽनृतंच सत्य मभवदिति तैत्तिरीयेच , श्रुत्यंतरसिद्धस्य चिदचिदीश्वराणां स्वरूपविवे कस्य स्मारितत्वेनाऽद्वैतस्य विशिष्टविषयत्व मुपपद्यते । तथाहि, अनेन जीवे नात्मनाऽनुप्रविश्येति जीवस्य ब्रह्मात्मकत्वं तदनुप्रविश्य सच्च त्यचाऽ भवत् विज्ञानंचाऽविज्ञानंचे त्यनेनैकार्थ्या दात्मशरीरभावनिबंधन मिति विज्ञायते । तद्धेदं त र्ह्यव्याकृत मासीत् । त न्नामरूपाभ्यां व्याक्रियते त्यत्रा प्युक्तं नामरूपव्याकरणमपि सर्वशाखाप्रत्ययन्यायेना ऽनुप्रवेशपूर्वकनामरूपव्याकरणपरमेव पर्यवस्यति ।

एवंच , सदेवेति कालविशेषोक्त मैक्यं नामरूपव्याकरणा भावमात्रपरं नतु स्वरूपैक्यपरमि त्यवगम्यते । कार्यकारणयो रैक्य मावेदयंतीनां श्रुतीनां तयो रेकद्रव्यत्वमेव प्रतिपाद्यं । नतु विशिष्टत्व निषेधः तस्य विहितत्वात् । एकविज्ञानेन सर्वविज्ञानम प्येकद्रव्य तामेवाऽ वगमयति । यथा मृत्पिंडेन तत्कार्यज्ञानेपि पिंडगतरू पादिनिषेधो नकृत स्स्यात् । तथा विशिष्टत्वं न प्रतिषिध्यते । अतः कारणावस्थः कार्यावस्थश्च स्थूलसूक्ष्मचिदचिद्वस्तुशरीरः परमेश्वरएवेति कारणा त्कार्यस्यानन्यत्वेन कारणविज्ञानेन कार्यस्य ज्ञाततया एकविज्ञानेन सर्वविज्ञान मस्मत्पक्षे समुपद्यते । एवं सद्विद्योपक्रमगतं सर्वविज्ञान प्रतिज्ञान मुपपन्नं ।

अथोपसंहारगतं तत्वमसीति सामानाधिकरण्य मप्यत्र मुख्यं ।

तथाच, अह मिमा स्तिस्रो देवता अनेन जीवेनात्मना प्रविश्य नामरूपे व्याकरवाणीति । तिस्रो देवताइति सर्वं मचि निर्दिश्य तत्र स्वात्मकजीवानुप्रवेशेन नामरूपव्याकरणवचनात् । वाचका श्शब्दा श्चिदचिद्विशिष्टस्य परमेशितुरेव वाचका इति का वस्थपरमात्मवाचिना शब्देन कार्यवाचिन श्शब्दस्य सामानाधि मस्मत्पक्षे मुख्यवृत्त मिति स्फुटं । अतः स्थूलसूक्ष्मचिदचि ब्रह्मैव कार्यं सूक्ष्मचिदचिद्विशिष्टं ब्रह्मैव कारण मिति ब्रह्मोपाद जगदिति सिद्धं ।

अथापि, यथा, शुक्लकृष्णरक्ततंतुसंघातोपादानत्वेपि पटस्य तत्तत्तंतुप्रदेशएव शौक्ल्यादिसंबंधइति कार्यावस्थायामपि न वर्णसंकरः । तथा चिदचिदीश्वरसंघातोपादानत्वेपि जगतः कार्य यामपि भोक्तृत्वभोग्यत्वनियंतृत्वाद्यसंकरः । तंतूनां पृथक्स्थिति नामेव पुरुषेच्छया कदाचि त्संहतानां कारणत्वं कार्यत्वंच ।

इहतु चिदचितो स्सर्वावस्थयोः परमपुरुषशरीरत्वेन तत्प्र यैव पदार्थत्वात् । तत्प्रकारः परमेश्वरएव सर्वदा सर्वशब्दवाच्य विशेषः। स्वभावभेद स्तदसंकरश्च तत्र चाऽत्रच तुल्यः। एवंचसति परमे कार्यानुप्रवेशेपि स्वरूपान्यथाभावाऽभावा दविकृतत्व मुपपन्नं अवस्थांतरापत्तेरेव कार्यतया स्थूलावस्थस्य नामरूपविभागविभ चिदचिद्वस्तुन आत्मतया ऽ वस्थाना त्कार्यत्वम प्युपपन्नं न किंचि दवद्यं ।

ननु , ब्रह्मण स्सर्वप्रपंचजन्मादिकारणत्वेपि कथं सर्वप्रपंचात्मकत्वं ? ब्रह्मप्रपंचयो रांतर्गणिकभेदांगीकारा दितिचे दुच्यते। यथा सागरे संपन्नजन्मस्थितिविलयं फेनवुद्बुदकदंबकं तद्रूपमेव दृश्यते। तथा शक्तिमति ब्रह्मणि संपन्नजन्मादिकं तन्मयमेव। तदतिरिक्तं किंचन नोपलभ्यते। यथा सागरे पवनादिसंक्षोभ्यमाणोपरितनपरिणामः वीचीफेनवुद्बुदप्रपंचः। एवं ब्रह्मणि तदिच्छासंक्षोभ्यमाणतदाश्रित शक्तिपरिणाम स्सर्वोयं प्रपंचइति सर्वोपपत्तिसिद्धेः।

नच , भेदे सत्येव कथं तदतिरिक्तानुपलंभइति शंक्यं, अथर्व शिरसि निरूपितत्वात्। तथाहि , अह मेकः प्रथम मासं। वर्तामिच भविष्यामिच। नान्यः कश्चि न्मत्तो व्यतिरिक्तइति। ततश्च, ब्रह्म॥ इत्यादिना विश्वरूपत्व मात्मनः प्रपंचितं। तत्र विश्वरूपत्वे सोंतरा दंतरं प्राविशदि त्यनुप्रवेशएव हेतु रुक्तः। तथाच अनुप्रवेशस्य तत्कर्मकर्तृभेदापेक्षतया भेदे सत्येव ताद्रूप्यतदव्यतिरेकव्यवहारो दृश्यतइति सर्व मुपपद्यते।

ननु , मह देत दिंद्रजालं। सत्येव भेदे ताद्रूप्यं तदव्यतिरेकश्चेतिचे न्न। जगतो ब्रह्मणाऽपृथक्सिद्धजन्मस्थितिप्रवृत्तिकत्वा दस्य तद्व्यतिरिक्तताया अभावात्। घटनैल्यन्यायेनाऽयुतसिद्धिरूपताद्रूप्यस्य वैलक्षण्यरूपतद्व्यतिरेकस्यच सिद्धत्वात्।

नच , चिच्छक्तिपरिणामस्य प्रपंचस्य चिच्छक्त्यैवाऽपृथक्सिद्धिः स्यात्। नतु परमेश्वरेणेति वाच्यं। चिच्छक्तेः परमेश्वरेणाऽपृथक्सिद्धतया तत्कार्यस्य तदात्मकस्य प्रपंचस्यापि तदपृथक्सिद्ध्यविरहात्।

तथाहि, शक्तयोस्य जग त्कृत्स्नं शक्तिमांस्तु महेश्वर: शक्तिस्तु शक्तिमद्रूपा व्यतिरेकं न गच्छति । तादात्म्य मनयो नि वह्निदाहकयोरिव । शक्तिशक्तिमतो र्यस्मा दभेद स्सर्वदा स्थितः । स्तद्धर्मधर्मित्वा त्पराशक्तिः परात्मनः । न वह्ने र्दाहिका शक्ति र्व्य रेका विभाव्यत इत्यभियुक्तोक्तिः । शक्त्यादिच पृथिव्यन्तं शिव समुद्भवं । तेनैकेनतु तद्व्याप्तं मृदा कुंभादिकं यथाइति वायुसंहिता । श्रु ॥ परास्य शक्ति र्विविधैव श्रूयते स्वाभावकी ज्ञानबलक्रिया एकएव रुद्रो न द्वितीयाय तस्थुः । य इमा न्लोका नीशत ईशनीभिः शक्तिभिरित्यादि श्रुतिस्मृत्यादिवचना न्यमुमेवाऽर्थं निर्धारयंति ॥ तत् श्रु ॥ सर्वं खल्विदं ब्रह्मेति सर्वशब्दवाच्यं सर्वचिदचित्प्रपंच कंच ब्रह्माऽभिधीयते । ततो ब्रह्मस्वरूपत्वा त्प्रपंचस्य प्रसिद्धत दिव्यविग्रहव त्तस्य पूज्यत्वेन द्वेषतत्प्रयुक्तनिग्रहाद्यनर्हत्वा त्ततो निवृत्त ब्रह्मोपासीतेति । नचोपासनाकर्मत्वेन ब्रह्म नश्रूयत इति वाच्यं । उपा कर्माकांक्षायां शांतिहेतूपदेशवाक्ये सन्निहितस्य सर्वात्मकस्य ब्रह्म वोपास्यत्वेनाऽन्वयसिद्धेः ॥

## ब्रह्मशरीररूपत्वपरिष्कारः.

ननु, तदनुप्रवेशनामरूपव्याकरणश्रुत्याद्यनुसारेण ब्रह्मण स शब्दवाच्यत्व मुपपद्यतांनाम । नतु सर्वशरीरकत्व मुपपद्यते ।

तथाहि, शरीरस्य द्रव्यैकरूपतया द्रव्यगुणकर्मादिरूप प्रपंचस्य शरीरत्व मनुपपन्नं । नापि, सर्वद्रव्यशरीरकं ब्रह्मेति युक्तं हस्तपादादिसंस्थानविशेषरहितानां काष्ठलोष्टादीनां शरीरत्वासंभवा दिति

न्न। यो यद्व्यापनेन नियच्छति त त्तस्य शरीरमिति लक्षणेन सर्वसंप्रतिपत्तेः। स्वनियम्यप्रपंचव्यापकतया ब्रह्मण स्सर्वचिदचित्प्रपंच शरीरकत्वात्।

अतएव, श्रु॥ यः पृथिव्यां तिष्ठन् पृथिव्या अंतरो यं पृथिवी नवेद यस्य पृथिवी शरीरं यः पृथिवी मंतरो यमय त्येपत आत्मांऽतर्या म्यमृत इत्यारभ्य यो विज्ञाने तिष्ठन् विज्ञाना दंतरो यं विज्ञानं नवेद यस्य विज्ञानं शरीरं यो विज्ञान मंतर्यमय त्येप त आत्मांऽतर्या म्यमृतइति ब्रह्मण स्सर्वचिदचिच्छरीरकत्व माम्नातं। एत मर्थं पुराणसूक्ति रप्युपबृंहयति। विग्रहं देवदेवस्य जग देत च्चराचरं। एत मर्थं न जानंति पशवः पाशगौरवात्। विद्येति चेतनां प्राहु स्तथा विद्या मचेतनां। विद्याऽविद्यात्मकं सर्वं विश्वं विश्वगुरो र्विभोः। रूप मस्य न संदेहो विश्वं तस्य वशे यतः। वृक्षस्य मूलसेकेन शाखाः पुष्यंति वै यथा। शिवस्य पूजया तद्व त्पुष्य त्यस्य वपु र्जगत्। अस्मा तस्याऽष्टमीमूर्ति श्शिवस्य परमात्मनः। व्यापि केतरमूर्तीनां विश्वं तस्मा च्छिवात्मकं। देहिनो यस्य कस्यापि निग्रहः क्रियतेयदि। अनिष्ट मष्टमूर्ते स्त त्रात्र कार्या विचारणा। सर्वोपकारकरणं सर्वानुग्रहणं तथा। सर्वाभयप्रदानंच शिवस्याराधनं विदुरिति। तस्मा त्सूक्ष्मचिदचिद्विशिष्टं ब्रह्म कारणं स्थूलचिदचिद्विशिष्टं ब्रह्मैव कार्यंचे त्यनवद्यं॥

ननु, कार्यकारणरूपोभयात्मत्वं ब्रह्मणो नयुक्त मितिचेन्न। भवतापि, 'द्विरूपं ब्रह्माऽवगम्यते। नामरूपविकारभेदोपाधिविशिष्टं। तद्विपरीतंच सर्वोपाधिविवर्जितमिति, तदुभयरूपत्वाभ्युपगमात्॥

ननु, भवता जगत ईश्वराश्रितशक्तिपरिणामरूपत्व मभ्यु परमेश्वरस्य शक्तिद्वारक मुपादानत्वं समर्थितं। तदसत्। उक्त शक्ते रे वोपादानत्वसिद्ध्या परमेशितु स्तदसिद्धे रितिचेत्। श्शक्तिपरिणामत्वेपि शक्ते रीश्वरा दनन्यतया परमेश्वरोपादानत्वाविरोधा अतएव परैरपि आनुमानिकाधिकरणे, परमेश्वराधीना त्विय मस्मा प्रागवस्था जगतोऽभ्युपगम्यते। न स्वतंत्रा। साचावश्य मभ्यु तव्या। अर्थवतीहि सा नहि तया विना परमेश्वरस्य स्रष्टृत्वं सिध्य शक्तिरहितस्य प्रवृत्यनुपपत्तेः। इत्युक्तं।

नच, अविद्यात्मिकाहि बीजशक्ति रव्यक्तशब्दनिर्दे परमेश्वराश्रया मायामायीति, तदनंतरभाष्येण तस्या बीजशक्ते र रूपत्वविवरणेन तस्याऽनादिवासनारूपत्वावधारणात् शक्तिरूपत्वं नि मिति शंक्यं। विज्ञानवादिनाप्युत्तरोत्तरजागतभ्रमस्य पूर्वपूर्ववा मूलत्वाभ्युपगमेन तदविशेषत्वापत्या बीजशक्तेः पारमेश्वरशक्तिरूप भ्युपगमस्यैव वैदिकसमुचितत्वात्। नापि शक्तेः परिणामित्वा गमे तस्याएव स्वातंत्र्य मापद्येतेति वाच्यं। श्रु॥ विद्याविद्ये ई यस्तु सोन्यइति चिदचिच्छक्त्यो रुभयोर पीश्वरनियम्यत्वश्रवणात्

नच, निरुपाधि ब्रह्मैव विद्या। सोपाधि तदेवाऽविद्येति करणसिद्धांतमंजूषाकारै र्व्याख्यातत्वेन विद्यापदं न चिच्छक्तिपर शंक्यं। ईशते यस्तु सोऽन्यइति विद्याऽविद्ययो र्नियम्यत्वस्य ब्र नियामकत्वस्य चाऽज्ञानेन स्वस्यैवोभयरूपत्वे कर्मकर्तृत्वविरोधात् अन्यस्य नियंतृत्वे स्वस्य ब्रह्मत्वविघाताच्च। तस्मात् स्वशक्तिद्वा मुपादानत्वं ब्रह्मणो नाऽसमंजसम्। परपक्षए वोपादानत्वस्याऽ

स्थितत्वेनाऽसमंजसत्वाच्च ।

तथाच, अद्वैतसिद्धांतलेशसंग्रहे, पदार्थतत्वनिर्णयकाराः, ब्रह्म मायाचे त्युभय मुपादानमि त्युभयश्रुत्युपपत्ति रिति। संक्षेपशारीरकृतस्तु ब्रह्मै वोपादानम्। कूटस्थस्य स्वतः कारणत्वानुपपत्ते र्मायाद्वारा कारणमिति। वाचस्पतिमिश्रास्तु जीवाश्रितमायाविषयीकृतं ब्रह्म स्वतएव विवर्तमानत योपादनं। माया सहकारिमात्रमिति। सिद्धांतमुक्तावळीकृतस्तु माया-शक्तिरे वोपादानं न ब्रह्मेति। तस्मा च्छक्तिद्वारक मुपादानत्वं ब्रह्मणो नाऽयुक्तमितिदिक्

ननु, ऐतदात्म्य मिदग्ं सर्वं नेह नानास्ति किंचन मृत्यो स्स मृत्यु माप्नोति यइह नानेव पश्यतीत्यादिना ब्रह्मव्यतिरिक्तस्य प्रपंचस्य मिथ्यात्वाम्नानेन ब्रह्मणो विवर्तोपादानत्वमे वोचितमितिचे न्न। प्रकृतोदाहृतश्रुतिवचनैः प्रपंचस्य ब्रह्मकार्यतया तदंतर्यामिकतयाच तदात्मकत्वेनैक्या त्तत्प्रत्यनीकनानात्वस्यैव प्रतिषिध्यमानतया तैः प्रपंच मिथ्यात्वाप्रतिपादनात्। जगन्मिथ्यात्वस्य भेदानिर्वनीयत्वस्यच सौत्रां तिकसमयमूलधनत्वेन वैदिकजनानुपादेयत्वाच्च। तस्मा ज्जग त्सत्य मित्येव युक्तं।

अतएव, भगवती श्रुतिः सोऽकामयत बहुस्यां प्रजायेयेति स ईक्षत लोकान्नु सृजाइति। स तपोऽतप्यत तदात्मानग्ं स्वय मकुरुत आत्मन आकाश स्संभूत इत्यादिना जगत स्सृष्टिं परमेश्वरसंकल्प सिद्धा मुक्त्वा, भीषाऽस्मा द्वातः पवते भीषोदेति सूर्यः। भीषास्मा दग्नि श्चेंद्रश्चेति। अस्य प्रशासना द्गार्गि सूर्याचंद्रमसौ विधृतौ तिष्ठत इत्यादिना जगतः स्थितिं, यस्य ब्रह्मच क्षत्रं चोभे भवत ओदनइत्या

दिना तस्य संहृतिंच परमेश्वरायत्ता मावेदयति । तथा, नाचार्योपि सू ॥ जन्माद्यस्य यतः । अभिध्योपदेशाच्च । अत परिणामात् । कंपनात् । प्रशासनात् । अक्षर मंबरांतधृतेः । अत्ता राचरग्रहणा दित्यादिना जगत स्सृष्टिस्थितिलयान् परमेश्वरा नसूत्रयत् । जगतो रज्जुसर्पमरुमरीचिकाव न्मिथ्यात्वे तस्य प्रशास मीशितु राश्रावयंती श्रुति स्तां सूत्रयन् बादरायणोवा नकथं परि भाजनतां भजेयातां । ततो यथोक्तमेव युक्तं । ननु सृष्टिवाक्या नोत्पत्यदिपराणि किं त्वैकात्म्यावगमपराणीति भाष्य उक्तं

तथा सतइ स्य स्याद्यंतयो स्सत्वेन मध्येपि सत्वानुमानेन काल बाध्यत्वरूपं सत्यत्वं । प्रपंचस्य त्वाद्यंतयो रसत्वेन मध्ये प्यसत्वा मानेन कालत्रयबाध्यत्वरूप मनृतत्वं । मध्ये कदाचि त्सत्वप्रतीति भ्रमविषयाणामेव तत्राऽनुवादइति विकारत्वादिप्रतीतिरपि भ्रमएवे तत्तात्पर्यमिति मंजूषाकारै र्विवृतं चेतिचेत् । उच्यते ।

अभ्यासेन जगदुत्पत्तिप्रतिपादकानां श्रुतीनां सृष्टौ तात्प सिद्धया तासां न सृष्टौ तात्पर्यमिति कथनस्य सौगतसमयभागधेयत्वात् आदा वंतेच यन्नास्ति वर्तमानेपि तत्तथेति परोदाहृतयुक्तेरपि बौद्धसम सिद्धत्वाच्च । तथाहि, आदा वंतेच यन्नास्ति तन्मध्येपि नास्त्येव । यथ शुक्तिरजतं । यच्च यतो भेदे नास्ति त त्त द्व्यतिरेणा प्युपलभ्यते ज्ञानज्ञे योः परस्परेणाऽनिरूपणा न्नैकमपि परमार्थमिति मतं तस्य । तदुक्तं भ वता लंकावतारे, बुद्धया विविच्यमानानां स्वभावो नावधार्यते । अतो नि भिलप्यास्ते निस्स्वभावाश्च देशिताइति । सू ॥ असद्व्यपदेशान्नेतिचेन्न धर्मांतरेण वाक्यशेषादि त्याचार्येण सत्कार्यवादस्यैव सिद्धांतितत्वेन

कार्यस्य त्रैकालिकसत्वसिद्धे रवार्थत्वाच्च। अतएव सत्वाच्चावरस्येति वैयासिकसूत्रे। श्रु॥ सदेव सोम्येद मग्र आसीदित्यादौ इदं शब्द गृहीतस्य कार्यस्य कारणेन सामानाधिकरण्यात्। यच्च यदात्मना यत्र न वर्तते न त त्तत उत्पद्यते।

यथा, सिकताभ्य स्तैलं। तस्मा त्प्रागुत्पत्ते रनन्यत्वा त्तदुत्पन्नम प्यनन्यदेव कारणा त्कार्य मवगम्यते। यथाच कारणं ब्रह्म त्रिषु कालेषु सत्वं न व्यभिचर त्येवं कार्यमपि जगत्त्रिषु कालेषु सत्वं न व्यभिचरतीति परैरपि जगत स्त्रैकालिकसत्त्वमभ्युपगतम्।

तस्मा त्कार्यस्य भ्रमात्मकत्व मयुक्तं। श्रुतीनां जगतः सृष्टौ तात्पर्याभावे जगत स्थितिप्रशासनलयानां प्रतिपादनं निरर्थकमेव। ततश्च सत्यमेव जगत्। शास्त्रकारप्रयाससार्थक्याच्च।

तथाच, भगवान् सूत्रकारः जन्मादीति जिज्ञास्यस्य ब्रह्मणो ऽसाधारणलक्षणतया जगज्जन्मजीवनादिकारणत्वं प्रतिज्ञाय तन्निर्वाहकतया सू॥ शास्त्रयोनित्वादिति सर्वज्ञत्वं प्रतिज्ञाय ईक्षते नाशब्द मित्यादिना प्रधानपरमाण्वादिकारणवादा न्प्रतिषिध्य प्रतिज्ञातं जगत्कारणत्वं महता शास्त्रेण समर्थितवान्। यदि श्रुतीनां न जगत स्सृष्टौ तात्पर्यं तर्हि सर्वोऽयं प्रयासो वैफल्य मश्नुवीत। भ्रांतिसिद्धप्रतिभासमात्ररूपत्वे भूयसः कार्यकारणविचारस्याऽनुचितत्वात्। भ्रमरूपत्वानु

क्तेश्च। जगतो भ्रमरूपत्वे तदधिकृत्याऽनेकं सूत्रजातं नि
सूत्रकृत् कथ मिदं भ्रमरूपमिति न निगदेत्। भ्रमाश्रयासिद्धेश्च।

तथाच, यदीदं जग त्स्या द्भ्रमात्मकं। तर्हि भ्रमाश्रयः
निर्धार्यं। ब्रह्मणोऽन्यस्याऽभावा त्तदाश्रयासिद्धिः। ब्रह्मणएव त
यत्वे तुच्छतापत्ति स्तस्मा ज्जगतो भ्रमरूपत्व मयुक्तं। तस्मा त्सत्य
सत्यसंकल्पस्यच परमेश्वरस्य संकल्पसिद्धं जग त्परमार्थसत्य मेवेति दि

नन्वेवं, चे ज्जग त्सत्यं। तर्हि कतिचि त्पूर्वाचार्या
मिथ्यात्वं कुतः प्रत्यज्ञासिषुः। नहि श्रुतिसूत्रविप्रतिपन्नार्थप्रतिपादने
जन मुत्पश्याम इति चेत्। उच्यते। सत्यस्यापि जगतो बं
तया हेयत्वात् तत्र विरक्तौ सत्यत्वविश्वासापेक्षया मिथ्यात्व
सस्य सुखोपायतां मन्वानै स्तथा प्रतिपादितं। तस्मा त्त्र तेषां
मिथ्यात्वप्रतिपादने तात्पर्यमिति युक्तम्।

## शेषत्वपरिष्कारः.

---

नन्वेवं जगतः सत्यत्वपरमेश्वरशरीरत्वादिसिद्धावपि न
पत्वं सिध्यति, जगद्ब्रह्मणो श्शेषशेषित्वस्याऽप्रमितत्वा दितिचेत्, उच्य
परमेश्वर मुद्दिश्य पशुपतयइति शेषित्वगमकस्य पशुपाशपतित्वस्य
प्वभ्यस्तत्वात्, पुराणेषुच, ब्रह्मादिस्तंबपर्यन्ता न्पशू न्बध्वा महे
पाशै रेतैः पति र्देवः कार्यं कारयति स्वक मिति, अस्यार्थ

बृंहितत्वाच्च सिध्यति। तस्मात् सू ॥ परार्थ श्शेपइति पारार्थ्यस्य शेपलक्षणतया चिदचिदात्मकस्य जगतः परमेश्वराराधनोपयोगित्व मवगम्यते। तथाच, तत्तदधिकारानुसारेण शिवाराधनरूपज्ञानकर्मानुष्ठातृतया चेतनवर्गस्य, तदाराधनस्थानतदुपकरणादिभावेनाऽचेतनवर्गस्यच शिवाराधनोपयोगित्वं प्रसिद्धम्। इदं पशुपाशपते श्शिवस्य सर्वचेतनाचेतनशेपित्वं तदीयसर्वैश्वर्यद्योतकतया सर्वोत्कृष्टत्वबोधकं भवतीति युक्त मिति शिवम्।



## ५. ब्रह्मपरिष्कार: .

इद ञ्जग द्देवमानवतिर्यक्स्थावरलक्षणम् , स्वर्भूम्याद्यनेक
विचित्रम् , विविधजन्तूपभोग्यप्रदेशसाधनयुतम् , देशका
मितानुरूपनियतप्रवृत्तिनिवृत्तिक्रम मत्यन्तकुशलैरपि शिल्पिभि र्दु
मेत द्भोक्तृकर्मविभागवित्सर्वज्ञपरमेश्वरकर्तृक म्भवितु मर्हति।
यवत्वेन कार्यत्वात् रथप्रासादादिवत् ।

## कर्मकारणत्वपरिष्कार:

नच , कर्मणोऽचिन्त्यप्रभावतया तस्य सर्वैरपि फलहेतुत्वाभ्युपगम
तेनैव निष्पन्ने जगति किं मीश्वराधिककल्पनयेति वाच्यम् , क
तन्त्वत्वा त्कर्मण उपभोगवैचित्र्यहेतुभूतस्यापि प्रध्वस्तस्य समा
पुरुषविशेष मन्तरेण स्वतः फलदातृत्वायोगात् ।

ननु , चेतनप्रयत्ननिर्वृत्त ङ्कर्मैव फलकाले फलस्य प्रयोक्
त्र। कर्मणोऽचेतनत्वेन तस्य फलदातृत्वानुपपत्तेः ।

नच , कर्मणः प्रयोक्तृकर्तैव फलकाले फलस्यापि प्रयो
शङ्क्यम् , कर्तुः देशकालविशेषानभिज्ञतया त्व म्मया निर्वर्तित
त्वा त्रियोऽस्यं त्वदनुगुणाय फलायेति नियोक्तु मशक्तत्वात् । तस्यैव
कालविशेषाभिज्ञतया स्वातन्त्र्येण फलस्य नियोक्तृत्वे कर्तु रनि
प्रयोक्तृत्वं न सम्भवेत् । नच त्वात्मसमवेत ङ्कर्म निर्निमित्त मनि
फलतया चर्मैव द्विकृति मापद्येत । नाप्यात्मकृत ङ्कर्माऽकर्तृसमवेतमे

स्कान्तमणिव त्फलाया ऽऽक्रूप्यं दिति वक्तुम् युज्येत प्रधानकर्तृसम-वेतत्वा त्कर्मणः ।

ननु, कर्तृसमवेतस्य कर्मणः फलदातृत्वायोगेपि भूताश्रयस्य तस्य फलदातृत्वं युक्त मितिचे न्न। कर्तृक्रियाया स्साधनभूताना म्भूताना क्रियाकालेऽनुभूतव्यापाराणां समासौ हलादिव त्कर्ता प रित्यक्ताना ङ्कालान्तरे फल ञ्जनयितु मशक्तत्वात्। नहि हलं क्षेत्रात् व्रीही न्गृह म्प्रवेशय दृष्टम्।

एवञ्च, करणकर्मणो रचेतनत्वात् स्वतः प्रवृत्ति रनुपपन्ना।

ननु, श्रु॥ स्वर्गकामो यजेतेत्यादिशास्त्र क्रियातः फलसिद्धि माह नेश्वरादेः। तस्मा त्कर्मणएव फलहेतुत्व मुपपद्यतइतिचे न्न। दृष्टन्यायपरित्यागानुपपत्तेः।

तथाच, कर्महि द्विविधं दृष्टफल मदृष्टफलञ्चेति। तत्राऽनन्तर-फल ञ्जतिभुजिलक्षण मागामिफलङ्कृपिसेवादिलक्षणञ्चेति दृष्टफलमपि द्विविधम्। तत्रागामिफल ङ्कृपिसेवादिलक्षण मात्मसेव्याधीन मेवच दृश्यते। नचोभयन्यायव्यतिरेकेण स्वतन्त्र ङ्कर्म दृष्टम्।

तस्मा च्छान्ते यागादिकर्मणि नित्यः कर्तृकर्मविभागज्ञ ईश्वरः सेव्यादिव यागानुरूपफलदा तोपपद्यते।

एवञ्च, केवलेन कर्त्रा प्रयुक्तस्य कर्मणः फलप्रदत्वस्या ऽदृष्टतया विनष्टस्य यागादेः कालान्तरे फलदातृत्वस्याऽयुक्ततयाच

सेव्यबुद्धिव त्सेवकेन यागादिकर्मणा सर्वज्ञेश्वरबुद्धौ संस्कृतायां विन्तः यागादिकर्मणि सेव्यादि वेश्वरा स्फल क्कर्तु र्भवतीति युक्तम् ।

यतश्च , कर्महि कालान्तरफल न्द्विप्रकारमे वोपलभ्यते । स बीजक्षेत्रसंस्कारपरिरक्षादिरूपं विज्ञानवत्कर्त्रपेक्षफल क्कृष्यादि, कि वत्सेव्यबुद्धिसंस्कारापेक्षफलं सेवादिकञ्चेति ।

एवञ्च , यागादेः कर्मणः विज्ञानवत्कर्त्रपेक्षफलत्वानुरू कालान्तरफलत्वा द्देशकालनिमित्तविभागज्ञबुद्धिसंस्कारापेक्षफल युक्तम् । सेवादिकर्मानुरूपफलज्ञसेव्यबुद्धिसंस्कारापेक्षफलस्येव । त त्सिद्ध स्सर्वज्ञ ईश्वरः ।

नच , सर्वजंतुकृतस्य कर्मणो वेदन मीश्वरस्य न सम्भव शक्यम् । तस्य सर्वभूतान्तरात्मतया सर्वजन्तुबुद्धिकर्मसाक्षित्वात् ।

ननु , महेशितु स्सर्वभूतान्तरात्मत्वे शारीरदुःखसंस्पर्श स रिणइव सर्वात्मन स्तस्यापि सर्वजन्तुगतदुःखसंस्पर्श स्समापद्येतेति न्न । ईशितु र्नित्यविज्ञानानन्दस्वभावतया संसारधर्मै रसंस्पृष्टत्वात् श्रु ॥ न लिप्यते लोकदुःखेन बाह्यः । जरामृत्यु मत्येति । वि विमृत्युः । सत्यकाम स्सत्यसंकल्पः , अनश्न न्नन्यो अभिचाकशी एष त आत्माऽन्तर्या म्यमृतइति नित्यमुक्तस्य महेशितु स्सिद्धौ श्रु स्मृतयश्च सहस्रश स्समुपलक्ष्यन्ते ।

नचाऽनुमानेनै वेश्वरसिद्धौ कि मागमेनेति वाच्यम् । अ माने नेश्वरसिद्धावपि सर्वात्मत्वाद्यनन्तमाङ्गल्यगुणवत्त्वस्य निर्दोषत्वस्य आगमैकवेद्यतया ब्रह्मण उपनिषन्मात्रवेद्यत्वानपायात् ।

## सगुणत्वपरिष्कारः.

ननु, न तावत् श्रुत्या सगुणत्वसिद्धिः। सगुणप्रकरणस्थाया उपास्तिविधिविशेषणसमर्पकत्वेन तत्परत्वाभावात्। नचाऽपूर्वत्वा त्सत्य कामादौ विशेषणे तात्पर्यमिति शंक्यम्। अपूर्वत्वे प्यन्यशेषस्याऽतत्परत्व दर्शनात्। तथाहि, जर्तिलयवाग्वावाजुहुयादित्यादौ जर्तिलयवाग्वादे र्होमसाधनत्वस्य "अनाहुतिर्वै जर्तिलाश्च यवीधुकाश्चेति निन्दायाश्च, अज क्षीरेण जुहोतीति विध्येकवाक्यतया अतत्परत्वम्। तथैवाऽत्राप्युपपत्ते रितिचे न्न। अत्र जर्तिलयवीधुकयो र्होमसाधनत्वाभावस्य अनाहुति र्वै जर्तिलाश्च यवीधुकाश्चेतिनिन्दयैव सिद्धत्वेन अन्यशेषत्वस्य तत्प्रयोज कत्वाभावात्। उपासनाविधिशेषत्वेपि सत्यकामादिश्रुते रतत्परत्वासिद्धेः।

अन्यथा, व्रीही न्प्रोक्षतीत्यादेरपि होमविधिशेषत्वेनाऽतत्परत्वा पत्तेश्च। निर्गुणपरत्वेन पराभिमतेपि प्रकरणे 'सर्वस्य वशी सर्वस्येशान इत्यादिना ब्रह्मण स्सगुणत्वाम्नानेन सगुत्वस्य दुरपलपत्वाच्च। नच, निर्गुणप्रकरणस्थाया स्सगुणश्रुते रद्वितीयब्रह्मप्रतिपत्त्यनुकूलनिषेधापेक्षित विषयसमर्पकतयाऽन्यथासिद्धे रतत्परत्व मितिशंक्यम्। निर्गुणश्रुतिप्रति पादितनिषेधापेक्षितविषयविशेषाणाम्" एष आत्माऽपहतपाप्मा विजरो विमृत्यु र्विशोको विजिघत्सोऽपिपास इति श्रुत्यैव कंठरवेण समर्पितत्वेन सर्वेश्वरत्वादीना मन्यथासिद्धे र्दुर्निरूपत्वात्। साधकाभावा न्निर्गुणत्व स्यैवाऽसिद्धेश्च।

ननु, अशब्द मस्पर्श मरूप मव्ययम्। साक्षी चेताः केवलो निर्गुणश्चेत्यादि श्रुतिः सू॥ अरूपवदेवहि तत्प्रधानत्वादिति

सूत्रंच साधकमस्तीतिचे न्न । य स्सर्वज्ञ स्सर्ववि द्यस्य ज्ञानमयं तप:
आनन्दं ब्रह्मणो विद्वा न्नबिभेति । सुखविशिष्टाभिधानात् । आनन्दादय
प्रधानस्य । विवक्षितगुणोपपत्तेश्चेत्यादिसूत्रैश्च सगुणत्वस्य प्रमितत्वा
गुणनिषेधपराणां हेयगुणनिषेधपरत्वस्याऽवार्यत्वात् । अन्यथा निर्गु
वचसां सगुणवचोभि र्व्याहति रापद्येत । नहि निर्गुणश्रुतीनां सगु
श्रुतीनांच विरोधोऽस्ति। प्रतिषिद्धगुणासंभवेपि प्रतिपादितगुणसंभवात्
नहि वह्नौ गंधो नास्ति रूप मस्ती त्यनयो र्विरोधः । एव मशब्द
मस्पर्श मित्यादिना प्रतिषिद्धा रूपादिगुणा माभूवन् । य स्सर्व
इत्यादिना प्रतिपादनात् ज्ञानादिगुणाः किं न भवेयुः । साक्षी चेत
केवलो निर्गुणश्चेति गुणसामान्यनिषेधश्च य स्सर्वज्ञइत्यादिगुणवि
विधिनांऽशो बाध्यते । यथा, न हिंस्या त्सर्वाणि भूतानीति सामान्य
निषेधोऽग्नीषोमीयं पशु मालभेतेतिविशेषविधिनांऽशो बाध्यते । यथाच
आहवनीये जुहोतीति सामान्यशास्त्रं पदे जुहोतीति विशेषविधिना तद

## ज्ञानगुणत्वपरिष्कारः.

नच, श्रु ॥ सत्यं ज्ञान मनन्तमित्यादि नोक्तं ज्ञानाधि
ब्रह्मणः स्वरूपत्वेन प्रतीयते न गुणत्वेनेति शंक्यम् । सू ॥ तद्गु
सारत्वा त्तद्व्यपदेश इत्याचार्येण ज्ञानस्य गुणरूपत्वकीर्तनात् ।
तर्हि सत्यं ज्ञान मनन्तं ब्रह्मेति सामानाधिकरण्य मितिचे न्नील मुत्प
मित्यादिव द्विशिष्टाभेदाभ्युपगमात् । किंचाऽत्र ज्ञानशब्दो न ज्ञा
भावसाधनो ल्युट्प्रत्ययान्तः । तथासति प्रत्ययाद्युदात्तत्वेना द्युदात्त
स्यात् । संज्ञानं विज्ञानं प्रज्ञान मिति वत् । अन्तोदात्तं हि श्रु

तस्मात् ज्ञान मस्याऽस्तीतिमत्वर्थीयार्शआद्यजन्तत्वेन चितइत्यंतोदात्तं पदं भवति । अनेनापि ज्ञानगुणवत्त्वमेव सिध्यति ।

किञ्च, परैः परब्रह्मपरतयाऽभ्युपगते बृहदारण्यकगते षष्ठाध्यायएव "सर्वस्य वशी सर्वस्येशानइत्यादिना सर्वेश्वरत्वादीनां गुणानां ब्रह्म ण्याम्नातत्वेन परंब्रह्म सगुणमेवेति सिध्यति ।

ननु, सर्वस्य वशीत्यादिवाक्यस्य "योऽयं विज्ञानमयः प्राणेष्वित्यादिवाक्योक्तजीवस्वरूपानुवादेन ब्रह्मस्वरूपताबोधनपरत्वेन ब्रह्म गतगुणबोधकतापरत्वं न संभवतीतिचे न्न । जीवस्वरूपानुवादेन तदन्त रात्मभूतब्रह्मस्वरूपबोधकत्वात् । तेषां गुणानां ब्रह्मगतत्वाभावे तत्तद्गुण वत्त्वप्रतिपादकवाक्यस्य ब्रह्मस्वरूपबोधनपरत्वायोगाच्च ।

नच, सगुणवाक्याना मौपाधिकगुणविषयत्वेन स्वाभाविक निर्धर्मकत्वश्रुते र्न विरोधइति शंक्यम्, सगुणवाक्याना मौपाधिकगुण विषयत्वे श्रुत्यप्रामाण्यपत्तेः। औपाधिकगुणविषयत्वस्याऽप्रमितत्वाच । क्वचिदपि निर्धर्मकत्वस्य स्वाभाविकत्वेन ऽश्रुतत्वाच । प्रत्युतश्रु॥ तस्यैव शक्ति र्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रियाचेति ब्रह्मण स्स्वाभावि कानन्तज्ञानबलादिमत्वेन श्रूयमाणतया निर्धर्मकत्वाभ्युपगमे श्रुति विरोधस्य दुरुद्धरत्वाच्च ।

ननु, अस्मदादाविव भौतिकोपाधिकत्वाभावेन, योगिष्विव योगार्जितत्वाभावेनच स्वाभविकत्वोक्ते स्सार्थक्य मितिचे न्न । परमेश्वरे ऽस्मदादिदृष्टान्तेन भौतिकोपाधिकत्वशंकाया अप्रसक्त्या श्रुतिगत स्वाभाविकपदस्य उपासनार्थकल्पितत्वादिशंकाव्यावर्तकतयैव सार्थक्यस्य तात्पर्यसिद्धत्वात् । ब्रह्मणो निर्धर्मकत्वे साधकाभावाच्च ।

नच ' साक्षी चेताः केवलो निर्गुणश्चेति श्रुतिसूक्ति सा मस्तीति चोद्यम् , अस्या स्सूक्ते ब्रह्मणो द्रष्टृत्वादिगुणविधायक निर्धर्मकतासाधकत्वाभावात् ।

ननु , अविद्यासिद्धसाक्षित्वाद्यनुवादेन तटस्थलक्षण ब्रह्मपरतया प्रकृतश्रुते गुणविधायकत्वाभाव इतिचे न्न । अवि शशविषायमानत्वेन तदभ्युपगमे ब्रह्मण स्तुच्छतापत्त्या तत्कृ साक्षित्वाद्यनुवादपरत्वे श्रुते रप्रामाण्यापत्ते. ।

नच , य स्सर्वज्ञ इत्यादिवचसां तटस्थलक्षणद्वारा प्रतिपादने तात्पर्यं । अन्यथा , एकविज्ञानेन सर्वविज्ञानप्र विरुध्येतेति शंक्यम् । सर्वविज्ञानप्रतिज्ञाया स्सविशेषब्रह्मविषय सागुण्यबाधकत्वाभावात् । एवं साधकसद्भावा द्बाधकाभा सगुणमेव ब्रह्म ।

ननु , मिथ्यात्वश्रुतिः , निर्गुणश्रुतिश्च बाधक मस्तीति न्न । मिथ्यात्वस्य निर्गुणत्वस्यचाऽश्रुतत्वात् । नच , एकमे द्वितीयमिति श्रुत्या ब्रह्मणोऽद्वितीयत्वस्य श्रुतत्वेन तेन तत्र विशे मिथ्यात्वं सूचितमिति वाच्यम् । तत्राऽद्वितीयपदस्य स्वव्यतिरिक्त ब्रह्मान्तरनिषेधपरत्वात् ।

ननु , एकशब्देन विजातीयस्य , एवकारेण सजातीयस्य अद्वितीयपदेन स्वगतस्यच भेदस्य निषेधकतया अद्वितीयपदं गुणं सद्वितीयतां न सहतइ त्यवगम्यते । तत स्सविशेषत्व मसंगत मिति न्न । सदेवेत्यादिवाक्यस्य ब्रह्मणोऽभिन्ननिमित्तकारणत्वादिप्रतिपादक विजातीयादिभेदनिषेधकत्वाभावात् ।

अन्यथा, जडेन विजातीयभेदस्य, चेतनेन सजातीयभेदस्य सत्यत्वज्ञानादिभि स्स्वगतभेदस्यच निर्धारणपराः श्रु ॥ सत्यस्य सत्यम्, चेतन श्चेतनानाम्, सत्यं ज्ञान मनन्त मित्यादिश्रुतयो व्याकुप्येयुः। श्रु ॥ न तत्समश्चाऽभ्यधिकश्च दृश्यतइत्याद्याब्रह्मणस्समानाधिकरा हित्यवोधिन्य स्सूक्तयश्च पीड्येरन्।

किञ्च, अद्वितीयपदस्य निर्विशेषपरत्वाभ्युपगमे " श्रु ॥ तदैक्षत बहुस्यां प्रजायेयेति ब्रह्मणो विचित्रशक्तियोगप्रतिपादक मुत्तरवाक्यं पीड्येत। तस्मात्, सदेव सोम्येतिवाक्येन ब्रह्मणोऽभिन्ननिमित्त कारणत्वं प्रतिज्ञाय, एकमेवेत्यने नोपादानान्तरं प्रतिषिध्य, अद्वितीयपदेन निमित्तान्तरमेव प्रतिषिध्यतइ त्यवश्यमेष्टव्यं सर्वश्रुतिप्रामाण्य प्रतिपालनतत्परैः तस्मा दौपनिषदं ब्रह्म सविशेषमेव।

ननु, सर्वेष्वपि वेदान्ते ष्वेकविज्ञानेन सर्वविज्ञानप्रतिज्ञा श्रवते। साच, सू ॥ तदनन्यत्व मारंभणशब्दादिभ्य इत्याचार्येण समर्थिताच। चिदचिदीश्वराणां भेदाभ्युपगमे सा विरुध्येतिचे न्न। प्रपंचब्रह्मणो रनन्यत्वं नाम शुक्तिरजतयोरि वैकतरमिथ्यात्वेनाऽत्यन्ता भेदरूपत्वमि त्यभ्युपगमे तत्स्वाभाविकगुणभेदपरबहुश्रुतिविरोधात्। मृद्धट योरिव गुणगुणिनोरिवच कार्यकारणत्वेन विशेषणविशेष्यत्वेनच विना भावरहितत्वमि त्यभ्युपगम्यते।

अतएव, नहि मृदंविना घटो दृश्यते। नीलिमानंविनाचोत्पलम् तथा, ब्रह्मविना नप्रपंचशक्तिस्थितिः। शक्तिव्यतिरेकेणच न कदाचिदपि ब्रह्म विज्ञायते। वह्निरि वौष्ण्यंविना। येन विना य न्न ज्ञायते तत्तेन विशिष्टमेव तत्त्वंच तस्य स्वभावएव। अत स्सर्वथा प्रपंचाऽविनाभूतं ब्रह्म। तस्मा

दनन्य दित्युच्यतइति भाष्ये समर्थितम् । ततएवच, सू ॥ तदन मारंभणशब्दादिभ्यइ त्यभेदं प्रतिज्ञाय, केवलाभेदभ्रान्तिवारणाय न अधिकन्तु भेदनिर्देशादिति सूत्रयत आचार्यस्याऽयमेवाऽभीप्सि विज्ञायते । तस्मा न्नैकविज्ञानेन सर्वविज्ञानप्रतिज्ञानिर्वहणार्थं किं थ्यात्वं शरणीकरणीयम् । तदभ्युपगमे विशेषस्य " ज्ञाज्ञौ द्वा वजा नीशौ । क्षरं प्रधान ममृताक्षरं हरः । इत्यादिबहुश्रुतिसूत्रसिद्ध श्रुतिसूत्राप्रामाण्यप्रसंगात् । श्रुत्यन्तरानुरोधेनैव प्रतिज्ञानिर्वहणस्य दु रत्वाच ।

ननु, निर्धर्मकत्वश्रुतिविरोधा न्न सगुणवाक्यं स्वार्थपर मि न्न । निर्धर्मकत्वस्याऽश्रुतत्वात् । नच, केवलोनिर्गुणश्चेति निर्धर्म श्रुत मिति शंक्यम्, तत्रत्यनिर्गुणपदस्य निर्दोषत्वपरतया निर्धर्मकत्व कत्वाभावात् । नापि निर्गुणपदे गुणपदस्य धर्मपरत्वसंभवे दोषपर संकोचस्याऽन्याय्यत्वा न्निर्गुणपदं निर्धर्मकत्वबोधक मेवेति शंक्य तथाऽभ्युपगमे श्रु ॥ य स्सर्वज्ञ स्सर्ववित् । ज्ञः कालकालो गुणी सर्ववि सत्यकाम स्सत्यसंकल्पः । इत्यादिबहुश्रुत्यन्तरै र्ब्रह्मणः कल्याणगु त्वस्य श्रुतत्वेन तद्विरोधापत्तेः ।

नच, निर्गुणवाक्यस्य निषेधकत्वा त्प्रबलतया सगुणवा बाधकत्व मेष्टव्य मिति वाच्यम्, निषेधवाक्यस्य प्राबल्ये न हिंस्यादि वाक्येन पश्वालभनवाक्यबाधापत्तेः । निरवकाशत्वेन सगुणवाक्य निर्गुणवाक्यबाधकत्वसंप्रतिपत्तेश्च ।

ननु, सामान्यविषयसमानकक्ष्यस्यैव विशेषविषयस्य स्यात् प्रकृतेच निर्गुणवाक्यस्य तत्परत्वा त्सगुणवाक्यस्याऽतत्परत्वा

निर्गुणवाक्यस्यैव प्रबलतया सगुणनिर्गुणवाक्ययो स्समानकक्ष्यत्वाभावा न्नसामान्यविशेषन्यायः प्रवर्ततइतिचे न्न। भेदाभेदश्रुत्यो रभेदश्रुतिमात्र इव सगुणनिर्गुणश्रुत्यो र्निर्गुणश्रुतिमात्रेपि तत्परत्वाभिनिवेशस्य श्रुत्यन्तराऽसांगत्यमूलकस्वमताभिमानमात्रमानतया समानकक्ष्यत्वाभावस्य दुर्निरूपत्वात्।

नच, निर्गुणवाक्यस्य परमपुरुषार्थपर्यवसायितया तत्परत्वेन प्राबल्यात् सगुणवाक्यस्य तत्सन्निधिपठितस्य फलवत्सन्निधा वफलं तदंगमितिन्यायेन निर्गुणवाक्यजन्यज्ञानानुकूलचित्तैकाग्र्यादिफलकोपासनापरतया नेयत्वा दितिचे न्न। श्रु॥ सत्यकाम स्सत्यसंकल्प स्सोऽन्वेष्टव्य स्स विजिज्ञासितव्य इति श्रुते स्सगुणस्यैव ज्ञेयत्वाद्यवगमेन निर्गुणवाक्यस्य परमपुरुषार्थपर्यवसायित्वानवगमेन तत्परत्वस्यैवाऽसिद्ध्या तन्मूलकप्राबल्यासिद्धेः श्रु॥ सोऽश्नुते सर्वा न्कामा निति फलवाक्ये ब्रह्मणा विपश्चितेति सार्वज्ञ्यगुणश्रवणेन सगुणस्यैव मुक्तप्राप्यत्वावगमेन निर्गुणवाक्यस्य परमपुरुषार्थगन्धसम्बन्धायोगाच्च।

एतेन, य न्निर्गुणवाक्यस्य तत्परत्वेन प्राबल्य मभ्युपेत्य सगुणवाक्यस्य तदंगतया नैष्फल्य मुक्तं तत्पारेसमुद्र मापातितम्। सगुणवाक्यानामेव भूयस्त्वा द्विप्रतिषेधाधिकरणन्यायेन स्वधर्मपरतया प्रबलत्वाच्च। नच, शतम प्यन्धानां नपश्यतीतिन्याया त्सगुणवाक्यानां भूयस्त्वेपि न तत्परत्वं सिध्यतीतिशंक्यम्, वेदार्थनिर्णये जैमिनीयन्यायस्यै वोपादेयत्वा त्तद्विरुद्धस्य लौकिकन्यायस्याऽनुपादेयत्वात्।

किञ्च, एकस्यामेव शाखायां दहरशांडिल्यादिविद्याभेदेनाऽभ्यासदर्शना त्सत्यसंकल्पत्वादीना मादरातिशयविषयतया तात्विकत्व

मवगम्यते । नचाऽय मभ्यास स्तत्तद्विद्यासु सत्यसंकल्पत्वादिप्राप्त्यं कचि दाम्नातानाम व्युत्पत्तिप्राप्यफलरूपत्वेन , सू ॥ इतरे त्वर्थसा न्यादितिन्यायतएव सर्वासु विद्यासु प्राप्ते रत स्सगुणश्रुति रुपास कल्पितगुणविषयत्वेन , निर्गुणश्रुतिविरोधेनचाऽतात्त्विकार्थेति निरस्त

ननु , नेतिनेतीति वीप्साबलेन प्रसक्तसर्वनिषेधे प्रतीते कति विषयविशेषशेषस्य कर्तु मशक्यत्वात् । अतएव , काकेभ्यो दधि रक्ष मितिव दत्रापि काकपदइव मानान्तरानुग्रहस्य तुल्यत्वात् ब्रह्मणो नि शेषत्वमेव सिध्यती त्यद्वैतसिद्धिकारै रुक्त मितिचे न्न। नेतिनेति वाक्यस्य प्रकृतैतावत्त्वप्रतिषेधकतया प्रसक्तसर्वविशेषनिषेधकत्वाभावात्

तथाहि , सू ॥ प्रकृतैतावत्त्वंहि प्रतिषेधति ततो ब्रवीति भूयः । इत्यधिकरणे , श्रु ॥ अथात आदेशो नेतिनेतीतिविषयः । नेति तीति निषेधस्य पूर्वप्रकृतमूर्तामूर्तप्रपंचात्मकब्रह्मरूपविषयताया मुभयनि बाधः प्रकृतेयत्ताविषयतायां न तद्बाधइति तद्विषयानवधारणा त्संशयः अत्र नेतिनेति , इतिशब्दपरामृष्टस्य नञा निषेधइति ताव न्निर्विवादः इतिशब्दः प्रकारवाची पूर्वप्रकृतं प्रकारं परामृशेत् । पूर्वंच द्वेवाव ब्रह्म णो रूप इत्यादौ मूर्तामूर्तप्रपंचात्मकं ब्रह्मणः प्रकारद्वयं प्रकृतम् । अ स्त न्निषिध्यतइति युक्तम् । नेतिनेतीतिवीप्सायां द्विरुक्तिः पूर्वप्रकृत रूपद्वयस्य साकल्येन निषेधप्रत्यायनार्था । अथ वैकेन मूर्तप्रपंचस्य नि धोऽपरेणाऽमूर्तप्रपंचस्येति द्विर्वचनसाफल्यम् । प्रकृतेयत्ता निषिध्यत तितु न युक्तम् । रूपद्वयव त्तस्याः प्रकृतत्वाभावा द्रूपद्वयनिषेधइव त षेधे साफल्याभावाच्च ।

नच, वाक्यशेषे अधिकगुणजातविधानं प्रकृतैयत्तानिषेधानुगुणं दृश्यतइति वाच्यम्, तदसिद्धेः। नह्येतस्मादितिवाक्ये प्रकृतब्रह्मापेक्षया उत्कृष्टं निषिध्यतइति ब्रह्मण स्सर्वोत्तरत्वगुणप्रतिपादकवाक्यशेष इतिचे न्न। तस्य पूर्ववाक्यार्थानुगुण्येन ब्रह्मान्यसर्वनिषेधकत्वोपपत्तेः। नापि, प्राणावै सत्यम्, तेषा मेष सत्य मित्यादिना भूयोगुणजातं विधीयतइति शंक्यम्, तस्यापि वाक्यस्य निर्विशेषत्वसाधकत्वात्।

तथाच, तत्र प्राणशब्दे नेन्द्रियवाचिना तद्विषया लक्ष्यन्ते। ते तावत् सन्घट इत्याद्यनुभवदर्शना त्केवलं प्रतिभासत स्सत्यभूताः। ब्रह्मतु वस्तुतोपि सत्यम्। तदपेक्ष योत्कृष्टं सत्यमिति। अथवा सन् मृत्पिंडः। सन्घटः। सत्कपालम्। स च्चूर्णमित्यादिप्रत्ययविषया मृत्पिण्डघटकपालदयो व्यावर्तमानसत्याः। ब्रह्मतु सर्वेष्व प्येतेषु प्रत्ययेषु सत्सदिति प्रत्ययवेद्य मनुगतं सत्यम्। व्यावर्तमानाश्चानुवर्तमाने कल्पिता दृष्टाः। यथा, रज्ज्वद्मंशे स्रक्सर्पभूदळनादयः। अतो व्यावर्तमाना घटादयः केवलं प्रतिभासत स्सत्याः। इति तेषा मुत्कृष्टं सत्यम्। पारमार्थिकं ब्रह्मेति। अतः प्रपंचनिषेधा न्निर्विशेषं ब्रह्म नोभयलिंगमिति पूर्वः पक्षः।

सिद्धान्तस्तु, प्रमाणान्तराप्रतिपन्नतया पूर्ववाक्ये श्रुत्यैव विहितं ब्रह्मणो मूर्तामूर्तप्रपंचवैशिष्ट्यं तदनन्तरवाक्येन निषेद्धुं न शक्यते। पूर्वापरग्रन्थव्याहतिप्रसंगात्। षोडशिग्रहाग्रहव द्वस्तुनि विकल्पासम्भवात्। अतः पूर्वं मूर्तामूर्तात्मकप्रपंचवैशिष्ट्योक्त्या बुद्धिस्थः प्रकृतैयत्तारूपः प्रकारो निषिध्यतइति युक्तम्। मूर्तामूर्तप्रपंचविशिष्टं ब्रह्मेत्येतावन्मात्रं न भवति। किन्तु, अधिकमपि गुणान्तरवत्त्व मस्तीति। वीप्सा त्वाद

रार्थत्वेन योजनीया। तदेव गुणजातम्, नह्येतस्मादिति वाक्यं प्रतिपाद्यते एतस्मा द्ब्रह्मणः परं स्वरूपतो गुणत श्चोत्कृष्ट मन्य इति तस्याऽर्थः।

ननु, नेतिनेतीतिप्रतिषेधेन स न्घट स्स न्पट इ त्यनुवृत्तं सद्रूपं ब्रह्म सत्यम्। अन्यत् व्यावर्तमानं घटादिकं प्रति इतिचे न्न। सू॥ त दव्यक्त माहहीति सूत्रेण, श्रु॥ न संदृशे ति रूप मस्य न चक्षुषा पश्यति कश्च नैन मित्यादिश्रुतिभिश्च प्रत्य सिद्धाया स्सत्ताया ब्रह्मत्वाभावनिर्धारणेन नेतिनेतीति प्रपंचो न विध्यत इत्यवगमात्।

अतएव, भगवत्पादैः प्रकृतैतावत्त्वाधिकरणे, अतो घ त्यनुवृत्तं सन्मात्रं प्रत्यक्षं ब्रह्मेति विरुद्धमेव। तस्य साक्षात्कारे निदिध्यासनादीनां वैयर्थ्यप्रसंगात् प्रत्यक्षेपि तादृशि तल्लिंगादर्शन अतः सन्मात्रं प्रत्यक्षं ब्रह्म तदन्यत् सर्वं निषेधति नेतिनेती युक्तमेवेति युक्तम्।

नच, प्रकृतैतावत्त्वाधिकरणे, कि मयं प्रतिषेधः रूपे यद्ब्रह्म चोभयमपि प्रतिषेधति। आहोस्वि देकतर मिति संशय्य, मपि निषेधतीति पूर्वपक्षंकृत्वा मूर्तामूर्तप्रपंचमात्रं निषिध्यतइति सिद्ध त मिति शंक्यम्, ब्रह्मणः प्रतिषेधविषयत्वेन शंकायाः पूर्वपक्षस्य युक्तत्वात्। नहि ब्रह्मणः प्रतिषेध्यत्वे तस्य जिज्ञासावा, सू॥ जन्मा यतइतिलक्षणोपन्यासोवा समुपपद्यते। ब्रह्म ते ब्रवाणीत्युपक्रमोवाऽनुग तस्मा द्ब्रह्मणः प्रतिषेधविषयतया न शंकापूर्वपक्षौ संगतो। मूर्तामूर्तप्रपंचनिषेधरूपस्सिद्धान्तो प्यपपूर्वक एव। श्रु॥ द्वेवाव

रूपे मूर्तंचामूर्तंचेति स्थूलस्य सूक्ष्मस्यच प्रपंचस्य ब्रह्मणो रूपतया समुपदिश्य तस्यैव प्रतिषेधेऽस्य भ्रान्तवाक्यव व्याहतत्वानपायात्।

ननु, नेदं शास्त्रं प्रतिपाद्यत्वेन ब्रह्मणो रूपद्वयं निर्दिशति,

किन्तु, लोकप्रसिद्धं त्विदं ब्रह्मणि कल्पितं परामृशति प्रतिषेध्यत्वाय, शुद्धब्रह्मस्वरूपप्रतिपादनायचेतिचे न्न, प्रपंचस्य लोकसिद्धत्वेपि तस्मिन् ब्रह्मरूपत्वस्य प्रमाणासिद्धत्वाम्। प्रमाणा न्तराप्रज्ञातस्य प्रतिषेधायोगात्। वरघाताय कन्योद्वाहवत् प्रतिषेध्य त्वाय रूपद्वयोपदेशस्याऽयुक्तत्वाच। तस्मात् प्रकृतेयत्ताविषयएव प्रतिषेधः।

ततश्च, प्रकृतैतावत्वंहि प्रतिषेधतीतिपारमर्षं सूत्र मस्मत्पक्ष एव सुसंगतम्।

आतश्च, उभयलिंगमेव ब्रह्मेति सांप्रतम्। एतेन, नेति नेतीतिवीप्सया प्रसक्ता स्सर्वेपि विशेषाः प्रतिषिध्यन्तइति दुरुक्तमेवेति सिद्धम्।

अत्रेदं तथ्यम्। श्रु ॥ सत्यकाम स्सत्यसंकल्पः। सर्वकर्मा सर्वरस स्सर्वगन्धः। य स्सर्वज्ञ स्सर्ववित्। ज्ञः कालकालो गुणी सर्वं वि द्यः। प्रधानक्षेत्रज्ञपति र्गुणेशः। इत्येवंजातीयका श्श्रुतयो ब्रह्म सगुण मुपदिशंति। श्रु ॥ केवलो निर्गुणश्च। अद्रेश्य मग्राह्यम्। इत्याद यस्तु ब्रह्म निर्गुणं निर्दिशन्ति। श्रु ॥ एष आत्माऽपहतपाप्मा विजरो विमृत्यु र्विशोकोऽपिपास स्सत्यकाम स्सत्यसंकल्प इत्याद्या श्श्रुतयएव हेयगुणान् प्रतिषिध्य कल्याणगुणा न्विदधत्य स्सगुणनिर्गुणवाक्ययो र्विषयं विविच्य विरोध माभासयन्तीति सगुणनिर्गुणश्रुत्यो र्विरोधा

भावा न्निर्दोषं निखिलमांगल्यगुण मुभयलिंगं ब्रह्मेति सिध्यति। य
यद्यपि परे निर्गुणवाक्यानां प्राबल्यं प्रतिज्ञाय तद्विरोधा त्सगुणवाक्य
कल्पितविषयत्वादिना गौणार्थकत्व मभ्युपयन्ति ।

तथापि, सगुणनिर्गुणवाक्ययो रुभयोरपि श्रुतित्वावि
दविरुद्धएव सिद्धान्त स्सामञ्जस्य मश्नुते ।

अतएव, भगवा नाचार्यः " अन्त स्तद्धर्मोपदेशात्।
धर्मोपपत्तेश्च । अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् । विव
गुणोपपत्तेश्च । अदृश्यत्वादिगुणको धर्मोक्तेः । सैवहि सत्याद
आनन्दादयः प्रधानस्य । इत्यादिना ब्रह्म सगुण मभ्यासेनाऽवधार
न क्वचिदपि निर्धर्मकं सूत्रेण सूचितवान् । विमर्शे मीमांसाया स्साक
सगुणपरतया तद्विरुद्धार्थस्याऽनुपादेयत्वाच्च ।

तथाहि, जिज्ञास्यस्य ब्रह्मणो जन्माद्यस्य यत इति
ज्जन्मादिकारणत्वरूपलक्षण मुपन्यस्य, तत्तु समन्वयादिति प्र
कारणत्वपरवाक्यानां समन्वयेन कारणत्वस्य सगुणैकविषयतया सम
याध्याय स्सगुणविषय इति स्पष्टम् ।

अथ, अण्वादिकारणवादरूपविरोध मुन्मूल्य कारणत्व
ब्रह्मण्येव निर्धारणेन विरोधपरिहाराख्यो द्वितीयोऽध्याय स्सगुणपरए
विदितम्। तथाच, प्रथमाध्यायसिद्धस्य ब्रह्मकारणवादसमन्वय
विरोधं परिहृत्य समर्थनेन तच्छेषतया द्वितीयाध्यायस्य सगुणपर
मविचलमेव ।

तथा, तृतीयाध्याये उपासनारूपसाधनस्य प्रधानतः कथ
उपासनाया स्सगुणैकविषयत्वस्य परेषामपि सम्मतत्वेनच साधना

स्तृतीयोऽध्यायस्सगुणपर एवेति विशदम् ।

एव न्तुरीयेऽध्याये - प्रथमे पादे , उपासनाप्रकारस्य - द्वितीय पादे जीव उत्क्रान्तिदशायाश्च - तृतीयपादे - अर्चिरादिगतेश्च - चतुर्थपादे ब्रह्मप्राप्तस्य भोगमात्रसाम्यलिंगाच्चेत्यादिना अवस्थायाश्च निरूपितत्वेन प्रकृताध्यायगतानां विषयाणां साकल्येन सगुणविषयत्वेन परैरेवाऽभ्युप गतत्वेन चतुर्थोपि फलाध्याय स्सगुणविषयएवे त्येवं चतुरध्यायी ब्रह्म मीमांसा ब्रह्म सगुणमेव निर्धारयन्ती निर्गुणवादं निर्मूलयतीति निर्गुण ब्रह्मवादो गर्भस्रावेण निस्सारितः ।

ननु , मीमांसायां सगुणव न्निर्गुणमपि ब्रह्म निरूपितम् । परापरब्रह्मपरतया शास्त्रस्य समन्वितत्वा दितिचे न्नैवम् । यदि मीमां सायां परापरविभागोऽभिप्रेत स्तर्हि , अदृश्यत्वाधिकरणे , अत्र द्वे विद्ये वेदितव्ये उक्ते । पराचैवाऽपराचेति तत्राऽपरा ऋग्वेदादिलक्षणा मुक्त्वा ब्रवीति । अथ परा यया तदक्षर मधिगम्यत इति परविद्याविषयत्वे नाऽक्षरं श्रुतम् । यदि पुनः परमेश्वरा दन्य ददृश्यत्वादिगुणक मक्षरं परिकल्प्येत । नेय म्पराविद्या स्यात् । परापरविभागोऽह्यय मभ्यु दयनिश्रेयसफलतया परिकल्प्यते । नहि प्रधानविद्या निश्रेयसफला केनचि दभ्युपगम्यते । तिस्रश्च विद्याः प्रतिज्ञायेरन् । त्वत्पक्षेऽक्षरा द्भूतयोनेः परस्य परमात्मनः प्रतिपाद्यमानत्वादिति परैरे वोक्तरीत्या परस्यामपि विद्यायां पुनः परापरविभागस्याऽभ्युपगततया विद्यात्रितयस्य प्रतिज्ञात व्यत्वापत्ते रवार्यत्वात् । .

किञ्च , ब्रह्मण उभयलिङ्गत्वमेवाऽनंगीकुर्वाणानाम्परेषां " किं द्वे ब्रह्मणी ? ' बाढं द्वे इति ब्रह्मद्वयांगीकारस्य हासावहत्वाच्च ।

अपिच, परैः विशेषवचनघटितानां सूत्राणा मवशत स्सविशेषपरत्व मूरीकृत्य - स्पष्टोह्येकेषां - मुक्तःप्रतिज्ञानाऽदित्यादिना सामान्यवचनघटितानामेव सूत्राणां कुसृष्ट्या निर्विशेषपरतया विवृतत्वेन तद्विवरणस्य सामान्यवचसां विशेषपरत्वव्यवस्थापकछागपशुन्यायविरुद्धत्वेन, निर्विशेषं न सामान्यमिति प्रमाणविरुद्धत्वेनच प्रामाणिकाना मनुपादेयत्वाच्च। तस्मा न्निर्विशेषत्ववादो निर्मूलइति दिक्।

इदंच, यदि मीमांसायां परापरविभागोऽभिप्रेत स्तर्हि समन्वयविरोधपरिहारादिविषयत्वेनाऽध्यायभेदं, स्पष्टब्रह्मलिंगादिविषयत्वेन पादभेदंचाऽसंकीर्णं निबध्नता आचार्येण परापरविषयतया प्रकरणभेदोऽपि निबध्येत। न तथा न्यबन्धि। तस्मा द्विज्ञायतेऽयं विभाग आचार्यस्याऽसम्मतइति। परन्तु, परैरेवाऽवतारितोऽ किंचित्कर इ त्यलं बहुना।

## विग्रहवत्त्वपरिष्कारः

ननु, ब्रह्मणो विग्रहवत्त्व मप्रमित मिति चे न्न। श्रु॥ ऋतं सत्यं परंब्रह्म पुरुषं कृष्णपिंगलम्। याते रुद्र शिवातनूः। उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तमित्यादिभि श्श्रुतिभि र्ब्रह्मणो दिव्यमंगळविग्रहवत्त्वप्रतिपादनात्।

नच, कल्पितविग्रहवत्त्वेन तदुपपत्ति रिति वाच्यम्। श्रुतीनां कल्पितार्थपरत्त्वे यथार्थपरत्वायोगेन तासा मप्रामाण्यापत्तेः। श्रुतिभि रादरा दभ्यासेन प्रतिपादितार्थस्य तात्पर्यसिद्धतया दुरपलपत्वाच्च।

नापि, विग्रहवत्त्वे, सू॥ अन्तवत्त्व मसर्वज्ञतावेति न्यायेन तस्याऽनित्यत्व मापद्येतेति चोद्यम्, अन्तवत्त्वमित्यादिन्याय

स्याऽऽनुमानिकेश्वरविषयत्वेन औपनिषदपुरुषविग्रहस्य नित्यत्वाऽवारणात्।

तथाच, अनुमाना दीश्वर स्सिध्यतिचे त्कुलालादिरिव शरीर सुखदुःखभोक्ता पुण्यपापवश्यो जननमरणवा नसर्वज्ञश्च सिध्येत्। इत्येव सूत्राशयो वर्णनीयः। कैवल्याद्यनेकश्रुतिसिद्धस्य विग्रहस्याऽप्रत्याख्येयत्वात्। बहुश्रुत्याम्नाततया तात्पर्यसिद्धार्थस्य सूत्रेण निराकर्तुमयुक्तत्वात्। श्रु॥ स्थिरेभि रंगैः पुरुरूप उग्रइति श्रुत्यैव पारमेश्वर विग्रहविषयानित्यत्वशंका निराकरणाच्च।

नन्वेवम्, श्रु॥ नहवै सशरीरस्य सतः प्रियाप्रिययो रप हति रस्तीत्यादिश्रुते र्विग्रहवत्त्वे प्रियाप्रियसंगो नापवृज्येतेतिचे न्न। तस्या श्रुते श्शुभाशुभकर्ममूलशरीरविषयत्वेन पारमेश्वर्या स्तनो रकर्ममूलतया तथा प्रियाप्रियसंगशंकानुदयान्।

अतएव, भोक्त्रापत्तेरितिसूत्रे "नखलु शरीरित्वप्रयुक्त मनिष्ट भोक्तृत्वं। किन्तु, पराधीनत्वप्रयुक्तमेव। यथा लोके राज्ञः सशरीरत्वे प्यनन्यवश्यस्य न स्वाज्ञाननुवृत्तिकृतानिष्टप्रसरइति भगवत्पादै स्समर्थितम्। श्रु॥ अनश्न न्नन्यइति परमेश्वरस्य प्रियाप्रियसंस्पर्शराहित्य माम्नातम्।

नच, विग्रहवत्त्वाभ्युपगमे "अपाणिपादमिति श्रुति र्विरुध्येतेति शंक्यम्, तया सूक्त्या परमेश्वर स्येन्द्रियराहित्यावगमेपि ' श्रु॥ अपाणिपादो जवनो गृहीता पश्य त्यचक्षु स्स श्रुणो त्यकर्णः। सर्वतः पाणिपाद न्तदितिच परमेश्वरस्य सर्वेन्द्रियशक्तिमत्त्वप्रतिपादनेनच सगुणत्वावगमेन तस्य लोकानुजिघृक्षापरिगृहीतदिव्यविग्रहराहित्यानवगमात्। तस्मा द्यथोक्तमेव युक्तम्।

## नामवत्त्वपरिष्कारः

ननु, श्रु ॥ नामरूपे व्याकरवाणीति श्रुत्या नामरूप कल्पितत्वाम्नानेन ब्रह्मणो नामरूपवत्त्वं न युज्यतइतिचे न्न। तस्य प्रपंचनामरूपचिकीर्षुब्रह्मवचनरूपतया ब्रह्मगतनामरूपप्रतिषेधकत्वाभावा

नच, श्रु ॥ आकाशोहवै नाम नामरूपयो र्निर्वहिता यदन्त तद्ब्रह्म इतिवचनेन नामरूपराहित्य माम्नात मिति शंक्यम्, तस्य ब्रह्मण स्स्वनिर्वाहितनामरूपप्रपंचवैलक्षण्यबोधकत्वेन ब्रह्मगतना रूपनिवारकत्वाभावात्। तस्मात् ब्रह्म नामरूपवदित्येव सिद्धम्।

अन्यथा, अमृतस्य हवा नामधेयानि। तस्य नाम महद्य शिव मद्वैतं चतुर्थं मन्यन्ते। शिवएव केवलः। एकएव रुद्रो न द्वितीय तस्थे। मायिनन्तु महेश्वर मित्यादिजातीयाः परमेश्वरस्य सामान्य विशेषतश्च नामवत्त्वप्रतिपादिन्योऽनन्ता श्श्रुतिसूक्तय उपरुध्येर न्नित्यलम्।

## —: शीवाभिधेयत्वपरिष्कारः :—

ननु, जगत्कारणं वस्तु "सदेव सोम्येद मग्र आसीत्। ब्रह्म इद मग्र आसीत्। आत्मा वा इद मेकए वाऽग्र आसीदित्यादिकारणवा सद्ब्रह्मात्मशब्दै रुत्तरोत्तरं विशेषपर्यवसायिभिः सद्रूपं बृह च्चेतनं तावत्पर्यन्तबुद्धिगृहीतम्। 'एकोहवै नारायण आसीदित्यादि प्र साधारणेन नारायणशब्देन निर्देशात्। छागपशुन्यायेन नारायणएवेति यतइतिचे न्न। श्वेताश्वतराणां मन्त्रोपनिषदि " यदा तम स्त

न रात्रि र्न स न्नचाऽस च्छिवएव केवल इति मन्त्रेण सर्वेषामपि कारण वाक्यानां शिवएव पर्यवसान स्योपपादितत्वात् ।

तथाहि, यदातमइति पूर्वार्धेन तमोऽवशेषांकितं काल मनूद्य तत्कालवर्ती शिवइति विधीयते । तेन "तमोवा इद मेक मास, तत्परे णेरितं विषमत्वं प्रयाति । प्रजापतिर्वा इदमेक आसीत् । नाह रासी न्न रात्रि रासीत् सोऽस्मिन्नन्धे तमसि प्रासर्पत् । नास दासी न्नोप दासी त्तदानीं तम आसीत् । तमसा गूढ मग्रे । इत्यादिषु तत्पुरोवादेषु तथाभूतकालविशेषावस्थायिकारणवस्तुसमर्पकाणां परप्रजापत्यादिशब्दा नां शिवे पर्यवसानं दर्शितं भवति । तृतीयपादेन मुण्डकादिश्रुतकारण वाक्येषु कारणवस्तुसमर्पकाणा मक्षरादिपदाना मादित्यमण्डलवर्तिनि पुरुषे कारणत्वाक्षेपकलिंगं सर्वान्तर्यामित्व मुपवर्णयन्त्या गायत्र्याश्च तस्मि न्पर्यवसानं दर्शितम् । चतुर्थपादेन, तदैक्षत बहुस्यां प्रजायेयेति स ईक्षत लोकान्नु सृजाइति । सोऽकामयत बहुस्यां प्रजायेयेति । तपसा चीयते ब्रह्मेतिच । स्रष्टु रादिसृष्टिपूर्वकालीनं स्रष्टव्यवस्तुजातालोचनं प्रतिपादयतां छान्दोग्यादिश्रुतकारणवाक्यानां तत्र पर्यवसानं दर्शितम् । एवं सर्वेषां कारणवाक्यानां शिवे पर्यवसानं प्रतिपादयितुं प्रवृत्तेनाऽनेन मन्त्रेण शिवएव जगत्कारणं ब्रह्मेति निर्धारणात् ।

ननु, "यदातमइति मन्त्रो न स्वयं कारणस्य तमसः प्रापकः । यदेति कालविशेषप्राप्तानुवादात् । प्राप्तिश्च "अव्यक्त मक्षरे लीयते तमः परे देव एकीभवतीति सुबालोपनिषद्वाक्येन । तत्रच परशब्दो नारायणपरः, एष आत्माऽपहतपाप्मा दिव्यो देवएको नारायण इति तत्र श्रवणात् । ततश्च नारायणाधिष्ठितस्य तमसः प्रापकं

श्रुत्यन्तर मिह पुरोवादइति तदनुरोधा दनुवादमन्त्रश्रुततमोऽधिष्ठा शिवशब्दो नारायणएव वर्तितव्यइति चेत्। उच्यते। अ यदातमइ त्यनुवाद: नतु सौबालवाक्यमेव पुरोवाद:। अन्य प्यनूद्यमानार्थप्रापकवाक्यानां सत्त्वात्। नाप्यस्मि न्मन्त्रे तन्नदिवे रनुवाद:। तद्वृत्तयोगेन तत्काले कस्यचि द्विधेयताऽप्रत विधेयश्च तत्र न दिवानिशाविभागाभाव: सदसदात्मकप्रपञ्चाभावे 'नाह रासी न्न रात्रि रासी' दिति 'नास दासी न्नो सदासीदि पुरोवादतएव तयो: प्राप्ते: नहि किंचि दनूद्य किञ्चि द्विधातुं प्रवृत्तं मनुवादायाऽवश्य मपेक्षिता त्पुरोवादादेव प्राप्तेऽर्थे पर्यवस्य त्सा मश्नुवीत। अत स्तत्रापि न दिवेत्यादि रनुवाद:। एवंच शिवश यदि कथंचि दौत्सर्गिकार्थपरतां हित्वा पुरोवादविशेषप्राप्ते नारायणे वस्येत्। तदा 'यदातमस्त' दिति किञ्चि द्विधातु मुद्यम्याऽ स्थितं वाक्यं किं विधेय मासाद्य विश्राम्यतु। नहि तस्य नारा शृत्तित्वे पुरोवादा दप्राप्तं कंचि द्विधानार्हं तदर्थं पश्याम:। त त्परमते वाक्यमेव ताव द्वैयर्थ्यं प्राप्नुयात्। अत स्तत्पुरोवाद तमोधिष्ठातृपरब्रह्मप्रजापतिनारायणादि सकलशब्दार्थनिर्धारणेदृश्यरैतदि बलात् सौबालश्रुत्याम्नातस्य नारायणनाम्नएव शिवे पर्यवसानं स्यात् नतु वैपरीत्यम्।

ननु, शिवशब्दस्य नारायणे क्षेमंकरत्वादियोगेन वृ सम्भवति। पन्थान स्सन्तु ते शिवा:, पावकोऽस्मभ्यं शि भवे, त्यादि लौकिकवैदिकव्यवहारे ष्वन्यत्रापि तस्य योगेन प्र दर्शनात्। नारायणशब्दस्यतु नार मयन मस्ये त्यादियोगेन शिवे वृ

न सम्भवति केवलयोगे णत्वासिद्धेः। पूर्वपदा त्संज्ञाया मगइति पाणिनीयसूत्रतः संज्ञाशब्दतयैव तत्र णत्व स्योपपादनीयत्वात् तस्य शिवनामत्वाभावेन तत्र तत्संज्ञाशब्दत्वेन णत्व स्योपपादयितु मशक्यत्वादितिचेत्। उच्यते। यदि तस्य शिवनामत्वं नास्ति। तदा विष्णुनाम्नएव तस्य भावितदवस्थोपलक्षिते सर्गाद्यसमयवर्तिनि शिवे लक्षणया वृत्तिः स्यात्। घटं करोतीतिवाक्यइव घटशब्दस्य भाविघटावस्थोपलक्षिते मृत्पिण्डे नतु तस्य शिवे योगो न सम्भवती त्येतावता शिवशब्दस्य नारायणपरत्वं स्यात्। मन्त्रवाक्यवैयर्थ्यापत्ते रुक्तत्वात्। योगा द्रूढिपूर्वकलक्षणायाएवाऽभ्यर्हितत्वाच्च।

यदितु 'सर्वाणि हवा एतस्य नामधेयानी त्याश्वलायनस्मरणात्' नामानि तव गोविन्द यानि लोके महान्तिच। तान्येव मम नामानि नात्र कार्या विचारणा इति हरिवंशे शिववचनेन विष्णुनाम्ना मन्येषांच प्रकृष्टप्रवृत्तिनिमित्तानां नाम्नाम् 'घनसार श्चन्द्रसंज्ञ इतिवचनेन चन्द्रनाम्नां कर्पूरनामत्ववत् शिवनामत्वस्य विधानात्। कूर्मपुराणे — वशित्वा द प्यवश्यत्वा दीश्वरः परिभाषितः। ऋषि स्सर्वगतत्वेन हरि स्सर्वगुणै र्युतः। अनुत्पादाच्च पूर्वत्वा त्स्वयम्भू रितिस स्मृतः। नाराअ प्ययनं यस्मा त्तेन नारायणः स्मृतः। हर स्संसारहरणा द्विभुत्वा द्विष्णु रुच्यते। भगवा न्सकलैश्वर्या दवना दोमितिस्मृतः। सर्वज्ञ स्सर्वविज्ञाना त्सर्व स्सर्वमयो यतः। शिव स्स निर्मलो यस्मा द्विभु स्सर्वगतो यतः, इति साक्षादेव नारायणशब्दस्य शिवनामसु निर्वचनाच्च परोक्त मयुक्तम्। मन्त्रोपनिषदुपक्रमादिपरामर्शे जगत्कारणभूतं ब्रह्म शिवएवे त्यवगम्यमानत्वाच्च।

तथाहि , मन्त्रोपनिषदि 'ब्रह्मवादिनो वदन्ति । किं
कारणं ब्रह्म । कुत स्म जाता इत्यदिना केषांचि द्ब्रह्मवादिना
जगतः पंचकृत्यकारणभूतं ब्रह्म किन्देवतात्मकमिति संशय मु
जगतोऽकारणकत्वस्य कालाद्यन्यकारणकत्त्वस्य वोपपत्तेः ब्रह्म जगदा
दिकारण मित्येतदेवाऽसिद्ध मिति संशयस्य निरालम्बनत्वपरि
तैरेव कृतं जगदकारणकत्त्वान्यकारणत्वपक्षद्वयनिरासं "काल
भावो नियति र्यदृच्छा भूतानि योनिः पुरुषइति चिन्त्यम् ।
एषां नत्वात्मभावा दात्मा प्यनीश स्सुखदुःखहेतोरिति प्रदर्श्य
स्तन्निर्णयाशक्तानां ब्रह्मविद्याधिदेवतायाः परशक्ते रम्बिकायाः प्र
तन्निर्णयो भविष्यतीत्यभिप्रायेण तां ध्यायतां तत्साक्षत्कारम् , ते
योगानुगता अपश्य न्देवात्मशक्तिं स्वगुणै र्निगूढाम् । यः कार
निखिलानि तानि कालात्मयुक्ता न्यधितिष्ठत्येक इत्यादिना ,
प्रसादा त्कालादिसकलावान्तरकारणाधिष्ठातारं परमकारणं
मपश्य न्नित्येतदर्थः प्रतिपादितः ।

एवञ्च , सर्वेषां कारणवाक्यानां शिवे पर्यवसानं सा
प्रतिपादयति मन्त्रे अस्मदादीनामिव पूर्वं मृषीणां सञ्जातं
त्कारणं ब्रह्म किंदेवतात्मक मिति संशयं प्रदर्श्य , स्वयं नि
मशक्नुवन्त स्ते ध्यानयोगप्रसादितपरमेश्वरीकटाक्षमहिम्ना शिवे
निश्चयं लेभिरइति मन्त्रजातेच जाग्रति क्षुद्रबुद्धिकल्पितन्यायसंचा
न्यत्र पर्यवसानासम्भवात् । यत्त्वत्र परैः 'मन्त्रोपनिषदि पुंसू
मन्त्रपाठेन तत्प्रत्यभिज्ञया प्रकृताया र्निपदो नारायणपरत्वं
त दसंगतम् । मन्त्रोपनिषदि श्वेताद्रिगतानां मन्त्राणां

पाठात्। ब्रह्मपथे पुंसूक्तस्यशिवपरत्वव्यवस्थापनाच्च। मन्त्रोप निषदि, अमृताक्षरं हरः। व्यक्ताव्यक्तं भरते विश्व मीशः। विश्वाधिको रुद्रो महर्षिः। तस्मा त्सर्वगत श्शिवः। शिवएव केवलः। मायिनन्तु महेश्वरत्। इति शिवरुद्रमहेश्वरादिश्रुतिशताम्नानेन प्रकृतोप निषदो देवतान्तरपरत्वशङ्कानास्पदत्वाच्च।

नच, मूलरामायणादौ नारायणपरत्वं निरूपित मिति चोद्यम्। श्रुतिसम्मतवाल्मीकिरामायणादे श्शिवपारम्यप्रतिपादनपरत्वस्य ब्रह्मपथे मुनिरूपितत्वेन तद्विरुद्धस्य परपरिकल्पितस्यच मूलरामायणादे र्निर्मूलत्वात्। अधिकन्तु श्रीसुदर्शनाचार्यविरचितायां श्रुतिसूक्तिमालायां, श्रीमदप्पयमखिराजनिर्मितेषु शिवतत्त्वविवेकशिवार्कमणिदीपिकादिषु त्रयस्त्रिंशत्सु निबन्धेषु, अस्मदीये ब्रह्मपथेच द्रष्टव्यम्। तस्मा ज्जगत्कारणं परंब्रह्म शिवएवेति निरवद्यम्।

## —: समानाधिकराहित्यपरिष्कारः :—

—:o:—

नन्वेवं जगत्कारणतया परमेश्वरस्य सर्वोत्कृष्टत्वसिद्धावपि तत्सदृशो नास्तीति न वक्तुं युज्यते। तत्समानधर्मणो नारायणस्य श्रूयमाणत्वात्।

तथाहि, सहस्रशीर्षा पुरुष इत्यारभ्य, त्रिपा दस्यामृतं दिवीति जगद्विशिष्टत्वं, त मेवं विद्वा नमृत इह भवतीति मोक्षहेतुत्वं चाऽवगम्यते। एवं स्मृत्यादिषु पूजाविधाने 'शिवंवा विष्णुमेववा, इति समानतया विकल्पः स्मर्यते।

तथा, तयो र्लोके पूजास्थानभूतक्षेत्रादिकं तत्प्रतिपाद पुराणागमजातंच समानतयैव दृश्यते। तस्मा त्परमेश्वरसदृशो ना यण इत्यवगम्यते इतिचेत्। न। श्रु॥ न तत्समश्चाऽभ्यधिकश्च दृश्य इति परमेश्वरस्य समानाधिकराहित्याम्नानात्। खद्योतो यदि चण्डभा सदृश स्तुल्यो हरि श्शम्भुनेत्यादिना सूतसंहितायां हरे श्शंम्भुसाम्य निराकृतत्वाच्च।

नच, पुंसूक्तेन नारायणस्य जगद्विशिष्टत्वादिक मवगम्य इति वाच्यम्, ब्रह्मपथे पुंसूक्तस्य शिवपरत्वव्यवस्थापनात्। नाति सौबालोपनिषदादिषु नारायणस्य जगदुपादानत्वं श्रुत मिति शंक्यम् नारायणस्य पारमेश्वरचिच्छक्त्यंशत्वस्य ब्रह्मपथे सुनिरूपितत्वेन तस्य तद्धेतुत्वात्। 'यत्तु, मोक्ष मिच्छे ज्जनार्दनादिति वचनेन नारायणस्य मोक्षहेतुत्वं स्मर्यते। तदपि जनार्दनस्य मोक्षविषयेच्छाजनकत्वरूपमेव। अतएव सूतसंहितायां, विरिंचस्य प्रसादेन तत श्शान्त्यादिसाधनम् प्रसादा द्वैष्णवा त्साक्षा न्मुमुक्षुत्वं पुनः स्वतइति मोक्षेच्छायाः विष्णु प्रसादकार्यत्वं निगदितम्।

ततएवहि, तत्रैव, सत्यसन्धोपाख्याने, 'प्रसादं कुरु मे देव मुच्येयं येन बन्धना दिति प्रार्थयमान मेकान्तभक्तं सत्यसन्ध मुद्दिश्य, 'अहं ब्रह्मादिदेवाश्च प्रसादा त्तस्य शूलिनः। प्रणाडैवर्तिः संसारमोचका नात्र संशयः। प्रसादो मुक्तिद स्साक्षा च्छिवा त्सत्यादि लक्षणात्। अम्बिकासहिता दस्मा त्सर्वज्ञादेव नाऽन्यतः। इति नारायणे नोक्तं संगच्छते। एवंच, विष्णूपासना तत्पदप्राप्तिद्वारा शिवपदप्रापकतया साक्षा त्ज्ञानावृत्तिफल शिवसायुज्यस्यैव मोक्षत्वात्।

अतएव महाभारतेपि , धर्मान्वेषी तपः कर्तुं यतेत सततं प्रिये । अमरत्वं शिवत्वंवा तपसा प्राप्ये त्सदेति तपसः स्वर्गमोक्षहेतुत्वकथने मोक्ष श्शिवत्व मेवेति व्यपदिष्टः । ततएव हि , 'शिव एको ध्येय श्शिवंकर स्सर्व मन्य त्परित्यज्येति शिवव्यतिरिक्तानां मुमुक्षुध्येयत्वं प्रतिषिध्यते । तस्मा त्परमेश्वरेण सदृशं तदुत्कृष्टंवा वस्तु ना स्तीति शिवएव सर्वाधिक स्सर्वसेव्य इतिच सिद्धम् ।

## —ः रूपवत्वपरिष्करः :—

नन्वेवमपि , श्रु ॥ अद्रेश्य मग्राह्यम् । अरूप मद्भुत मित्यादिना रूपनिषेधा द्रूपवत्त्वं न सिध्यतीतिचे न्न । रूपगुण निषेधश्रुतीनां हेयरूपगुणनिषेधपरत्वात् ।

नच , सू ॥ अरूपवदेवहि तत्प्रधानत्वादिति रूपराहित्यं सूत्रित मिति शंक्यम् । अरूपवदिति पदस्य रूपरहितवस्तुवदित्य र्थकवतिप्रत्ययान्ततया रूपराहित्यबोधकत्वाभावात् । नापि तत्पदं मतुबन्त मिति चोद्यम् । अरूप मित्यनेनैव रूपनिषेधे सिद्धे मतुबोऽन र्थकत्वात् । न संदृशे तिष्ठति रूप मस्य न चक्षुषा पश्यति कश्च नैन मिति श्रुत्यैव चक्षुर्विषयत्वं प्रतिषिध्य हृदा मनीषा मनसाऽभिक्लृप्ता य एत द्विदु रमृता स्ते भवन्ती त्यादिना , अन्तरिन्द्रिय दृश्यत्वविधानाच्च ।

अतएव , दृश्यते त्वग्रयया बुद्धया सूक्ष्मयेति कण्ठरवेण मनो दृश्यत्व माम्नातं संगच्छते ।

नच , अग्राह्य मित्यादिनाऽविषयत्व मुक्त मिति शंक्यम् ।

उदाहृतश्रुत्यनुरोधेन तेन वाक्येन बहिरिन्द्रियमात्राविषयत्वावगमात्। अन्यथा, बुद्धिग्राह्यत्व मुक्तं पीड्येत।

किञ्च, श्रु॥ वेदाह मेतं पुरुषं महान्त मादित्यवर्णं न्तमसः परस्तात्। य स्ते कल्याणतमं रूपं पश्यामि। यदापश्यः पश्यते रुक्मवर्णं मित्यादिना परमेश्वरस्य वर्णसाहित्यबोधिन्य श्श्रुतयो व्याकु प्येयुः। अपिच, आत्मावारे द्रष्टव्यः। तस्मि न्दृष्टे परावरे ततस्तु तं पश्यते निष्कलं ध्यायमान इत्यादिना परमेश्वरस्य दर्शनविधायिन्योऽनन्ता श्श्रुतयः पीड्येरन्।

नच, श्रुत्यन्तनिगदितं दर्शन मविषयं ज्ञान मेवेति श्रमितव्यम्, तस्याऽविषयत्वे रुक्मवर्णत्वादित्यवर्णत्वादिश्रवणस्याऽसंगतत्वात। अतएव, वेदप्रशंसितस्त्रोक्ति भगवा न्मनुः "रुक्माभं स्वप्नधीगम्यं विद्यात्तु पुरुषं पर मिति परमेश्वरं हृतकनकसवर्णं निर्णीतवा निति शिवम्।

नन्वेवं ब्रह्मण स्सगुणत्वे नामरूपवत्वेच कुतःकतिचि त्पूर्वाचार्याः ब्रह्म नामरूपरहित मित्यवादिषु रितिचेत्।

उच्यते, ब्रह्मण स्सगुणत्वेन तत्प्रयुक्तव्यवस्थितनामरूपवत्त्वाभ्युपगमे विविधनामरूपयुक्तब्रह्माभ्युपगन्तृ शैवादिविमतजनसमावर्जनस्य दुष्करतया तादृशजनतासमावर्जनेन संघीभावसम्पिपादयिषुभि स्तै स्तथा समर्थितमिति व्यासपथेविस्तर इत्यलम्

———

## ६. जीवपरिष्कारः

अत्र केचित्, ब्रह्मैव सर्वशरीरेषु जीवभाव मनुभवति। श्रु॥ अनेन जीवे नात्मनाऽनुप्रविश्य, एको देव स्सर्वभूतेषु गूढः। एको देवो बहुधा निविष्टः, नाऽन्योऽतोऽस्ति द्रष्टा इत्यादिश्रवणात्।

नच, ब्रह्मणो जीवभावे कारण मसिद्ध मिति वाच्यम्, जीवभावकल्पिकाया अविद्याया अनुभवसिद्धत्वादिति। त दनाकलितरम णीयं विकल्पासहत्वात्।

## ब्रह्मभिन्नत्वपरिष्कारः

तथाहि, जीवस्य कि मकल्पितस्वाभाविकरूपेणाऽविद्याश्र यत्वं? उत कल्पिताकारेण? अथ कल्पिताकारविशिष्टरूपेण? अत्र प्रथमे कल्पे ब्रह्मणएवाऽविद्याश्रयत्व मुक्तं स्यात्। द्वितीयंतु जडस्याऽ विद्याश्रयत्व मुक्तं स्यात्। तदुभयव्यतिरिक्ताकारस्याऽनभ्युपगमात्। तृतीयंतु, अविद्याश्रयत्वे सति विशिष्टत्वं विशिष्टाकारएवाऽविद्याश्रयत्व मित्यात्माश्रयणं प्रसज्येत। तस्मात् ब्रह्मणो जीवभावो दुरुपपादः।

किञ्च, अविद्याकल्प्यस्य जीवस्य कल्पकः क इति विमर्श नीयं। न ताव दविद्या अचेतनत्वात्। नापि जीवः आत्माश्रयदोष प्रसक्तेः। शुक्तिकारजतादिव दविद्याकल्प्यत्वाच्च जीवभावस्य। ब्रह्मैव कल्पक मिति चेत्, ब्रह्माज्ञानमेवाऽभ्युपगतं भवेत्।

ननु, अविद्यायां चित्प्रतिबिंबो जीवइ त्यभ्युपगत मिति चे त्तन्न। अविद्याया न विद्यत इति व्युत्पत्त्या तदविद्यमानत्वस्य मच

तैवाऽभ्युपगतत्वेन तत्र चित्प्रतिबिंबस्य सुतरा मसंभवात्। अ
विप्रकृष्टस्य प्रतिबिंबग्रहणयोग्यस्य ब्रह्मातिरिक्तस्य वस्तुनोऽद्वैत
दुर्निरूपत्वा त्प्रतिबिंबासिद्धेश्च।

ननु, मायाचाऽविद्याच स्वयमेव भवतीति श्रुत्या अवि
सिध्यतीति शंक्यं, तद्वचनस्य प्रात्यक्षिकश्रुतिषु अनुपलभ्यमान
तेन तत्सिद्धययोगात्। ब्रह्मातिरिक्ताविद्याभ्युपगमेऽद्वैतहाने स्तदनभ्यु
प्रतिबिंबासिद्धेश्च।

अपिच, अद्वैतभंगाभ्युपगमेनाऽविद्या माश्रित्य तत्र प्रति
कल्पनापेक्षया ब्रह्मभिन्नजीवाभ्युपगमस्यैव युक्तत्वाच्च। नीरूपस्य बिं
विद्यायां प्रतिबिंबस्य दुरुपपादत्वा त्कथंचि त्तदुपपादेपि प्रतिबिंबरू
जीवस्य मुक्त्यन्वयासम्भवेन मुक्तेः स्वरूपोच्छित्तिलक्षणत्वापत्तेश्च।

ननु, अन्तःकरणावच्छिन्नं चैतन्यं जीव इति चे न्न। अवच्छि
जीवत्वे कर्तृत्वभोक्तृत्वसमययो स्तत्रतत्ताऽतःकरणाऽवच्छेद्यचै
प्रदेशस्य भिन्नत्वा त्कृतहानाऽकृताभ्यागमप्रसंगस्य दुरपलपत्वात्।

नच, न प्रतिबिंबो नाप्यवच्छिन्नो जीवः। किंतु, कौ
स्यैव राधेयत्ववत् व्याधकुलसंवर्धितस्य राजकुमारस्य व्याधकुलीन
अविकृतस्य ब्रह्मणएव स्वाऽविद्यया संसरति स्वविद्यया मुच्य
बृहदारण्यकभाष्ये प्रतिपादनात् 'राजसूनोः स्मृतिप्राप्तौ व्याध
निवर्तते। तथैव मात्मनोऽज्ञस्य तत्त्वमस्यादिवाक्यत
वार्तिकोक्तेश्च इतिचे न्न सार मेतत्। कौंतेयस्य राजकुमारस्य
ज्ञानास्पदत्वेनात्मनि विपरीतभावोपपत्तावपि ब्रह्मण स्तदनास्पद
जीवभावानुपपत्तेः। श्रु॥ ज्ञाज्ञौ द्वा वजावीशानीशाविति

ब्रह्मणो विलक्षणस्याऽज्ञस्य जीवस्य श्रुतिसिद्धत्वे नाऽद्वैतवादविश्वासेन त दनादृत्य ब्रह्माज्ञानाभ्युपगमस्य ब्रह्मण स्तुच्छतापादकत्वेन वैदिकजना परिग्राह्यत्वाच्च ।

अतएव , सू ॥ आभासा एवेति सूत्रेण सत्यमिथ्योपा धिभ्यां बद्धस्य ब्रह्मणएव जीवभावइति पक्षद्वयेपि युक्तय आभासा एवेति भगवता सूत्रकारेणाऽऽभासितोऽद्वैतवादः ।

ननु , आभासा इत्यनेन चिदाभासत्वमेव जीवस्य निरूपितम्। अद्वैतपरमसिद्धांत एकजीववादे हिरण्यगर्भ एको ब्रह्मप्रतिबिंबो मुख्यो जीवः । अन्येतु , तत्प्रतिबिंबभूता श्चित्रलिखितमनुष्यदेहार्पितपटा भासकल्पा जीवाभासा स्संसारादिभाजइ त्यद्वैतशास्त्रसिद्धांतलेशसंग्रहे पञ्चदश्यांच निर्धारित मिति चेत् । उच्यते । संसारिणः प्रतिबिंब भूतहिरण्यगर्भप्रतिबिंबतया चित्रलिखितमनुष्यदेहार्पितपटाभासकल्पत्वे तस्य वंध्यापुत्रसदृक्षत्वा त्तदाधिकारिकस्य कृत्स्नस्यापि शास्त्रस्याऽऽनर्थक्य प्रसंगेन सकलमोक्षशास्त्रप्रतिपक्षस्य भवत्पक्षस्याऽनुपादेयत्वात् ।

अपिच , हेत्वाभासे हेतोरिव चिदाभासे चैतन्यस्य शून्य त्वेन संसारिणो लोष्टकाष्ठसमानकाष्ठतया आभासवादस्य हासावहत्वाच्च ।

ननु , अह मज्ञइ त्यज्ञानस्य स्वानुभवसिद्धत्वेन सकलविपक्ष तर्काणा मनुभवनिर्मूलितत्वेन ब्रह्मणो जीवभावस्य न का प्यनुपपत्ति रिति चे न्न । अह मज्ञ इ त्यज्ञानानुभवस्य श्रु ॥ ज्ञाऽज्ञाविति ब्रह्म भिन्नजीवस्यागाविकत्वेनाऽऽज्ञातत्या ऽस्यानुभवस्य ब्रह्माऽज्ञानकल्पकत्वा भावात् श्रुतिविरुद्धत्वाच्च ।

ननु , जीवपरभेदस्य स्वाभाविकत्वे स्वतस्सिद्धं न नश्यतीति न्यायेन ब्रह्मत्वस्य दुष्प्रापत्वा त्संसारिणो निर्मोक्षप्रसंग इति चोद्यं ज्ञाधिकरणे , मायाशक्तिकवलितस्वाभाविकज्ञानशक्तिविलासोऽयं प्राक् मनस्संबंधा द्धोक्ता सुखदुःखयोः अज्ञाना च्छरीराहंकारमात्रविश्रांतः स्संसरतीह जीवः । यदा पुन रस्य ब्रह्मज्ञानोपासनाभ्यासा न्मलक्ष मपयाति । तदाऽसौ ब्रह्मसदृशो ऽभिव्यक्तनिजनिरतिशयज्ञानः मुक्त इत्युच्यतइति भगवत्पादै स्सुनिरूपितत्वात् ।

ननु , ब्रह्मैव स्वाऽविद्यया संसरति स्वविद्यया मुच्यत इत्यभ्युपगमे किं व च्छिन्न मितिचेत् । उच्यते । श्रु ॥ संसारमोक्षस्थितिबंधहेतुः सू ॥ पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बंधविपर्ययाविति श्रुतिसूत्राभ्यां परमेश्वरस्य बंधहेतुतया जीवस्य बंधमोक्षाधिकारितयाच निर्धारितत्वेन श्रुतिसूत्रसिद्धपरमार्थहाने रनभ्युपेयत्वात् ।

तथाहि , सू ॥ पराभिध्यानात्तु त्तिरोहितं ततो ह्यस्य बंधविपर्ययौ । जीवस्याऽनाद्यपचारप्रवाहेण पराभिध्यानात् परमेश्वरसंकल्पात् तस्य सत्यसंकल्पत्वादिकं तिरोहितं तदपचारा त्त दव्यक्तीकृतं । तस्मादेव परमेश्वरसंकल्पा दस्य बंधमोक्षौ भवतः ।

तथाहि , श्रुतिः , यदा ह्येवैष एतस्मि न्नुदर मंतरं कुरुते अथ तस्य भयं भवति । यदा ह्येवैष एतस्मि न्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयने ऽभयं प्रतिष्ठां विंदते । अथ सोऽभयं गतो भवतीति एवं जीवस्य बंधमोक्षयोः परमेश्वरसंकल्पहेतुत्वकथनेन परमेश्वरा दन्यैनैव जीवेन भवितव्यमि त्यवगम्यते ।

अन्यथा, तयोः स्वसंकल्पमूलतया परमेश्वरसंकल्पायत्तत्व कथनं विरुध्येत। अत्रेदं परकीयं विवरणं, ततोहीश्वरा द्धेतो रस्य बंधमोक्षौ भवतः। ईश्वरस्वरूपाज्ञाना द्बंधः तत्स्वरूपपरिज्ञानात् मोक्षः। ज्ञात्वा देवं सर्वपाशापहानिः। क्षीणैः क्लेशैः सर्वमृत्युप्रहाणिः। तस्याऽभिध्या ना त्तृतीयं देहभेदे विश्वैश्वर्यं केवल आप्तकाम इति॥ श्वेता। एवं तत्रापि बंधमोक्षयोः परमेश्वरहेतुत्व मवधारितं। अतो यथोक्तमेव युक्तं।

अन्यथा, मृत्युपाशादिशब्दितस्याऽज्ञानहेतो र्बंधस्य ब्रह्म गतत्वाभ्युपगमे ब्रह्मण स्तुच्छतापत्ते रवार्यत्वात्।

अतएव, भगवता आचार्येण जीवस्य ब्रह्माभेदोऽनूद्य निराकृतः।

तथाहि, सू॥ अश्मादिवच्च तदनुपपत्तिः। सर्वथा जीवे श्वरयो रभेदएवाऽभेदश्रुतिभि रितिचे न्न। अनुपपत्तेः। अश्मकाष्ठलोष्ट तृणादे रचेतनस्येव जीवस्या प्यज्ञत्वादिना सर्वज्ञत्वादियुक्ता दीश्वरा दत्यंतविसजातीयत्वश्रवणा त्तयो रेकभावानुपपत्तेः। तस्मा ज्जीव ईश्वरा दर्थांतरभूतएव। एवं चेतनस्या प्यधिकगुणवैषम्या दीश्वरभावा नुपपत्तौ किमुताऽचेतनस्य स्वरूपविलक्षणस्येति तात्पर्यं। सर्वथा श्रुति स्मृतिन्यायैः कार्यत्वेन स्वानन्यभूतादपि चेतनाचेतनप्रपंचा द्विश्वस्मा दधिक एव सर्वज्ञ स्सर्वशक्तिः परमेश्वर इति। तस्मा त्परमेश्वरा ज्जीवोऽर्थांतरभूत एवेति सुव्यक्तम्।

---

## कर्तृत्वपरिष्कारः

ननु, जीवस्य परमेश्वराधीनकर्तृत्व मुक्तं। त दयुक्तं। तस्याऽकर्तृत्वाऽभ्युपगमा दितिचे न्न। सू॥ कर्ता शास्त्रार्थवत्वा दित्यादिना जीवकर्तृत्वस्याऽऽचार्येण राद्धांतितत्वेन तद्विरुद्धत्वात्। तद कर्तृत्वस्य सांख्यमताभिप्रेतत्वाच्च।

नच, सू॥ यथा तक्षोभयथेत्यात्मनि कर्तृत्व मौपाधिक मित्युक्त मिति शंक्यं, सूत्रे औपाधिकत्वाप्रतीतेः। यथा तक्षा सत्यामे वेच्छायां वाश्यादिकरणसंपत्तौ करोति, नाऽन्यदा। एवं जीवोपि सत्यामे वेच्छायां मनआदिकारणसंपन्नः करोति नान्यदे त्येतावन्मात्र स्यैव सूत्रा त्प्रतीतेः। औपाधिकशब्दाभावात्। तक्ष्ण औपाधिककर्तृता भावेन तद्दृष्टांतबलेना प्यौपाधिककर्तृत्वालाभाच्च।

किंच, जीवगतकर्तृत्व स्यौपाधिकत्वे स्वाभाविककर्तु रन्यस्याऽनुपलंभाच्च।

नच, बुद्धे स्स्वाभाविककर्तृत्व मस्तीति वाच्यं, तस्यांऽतःकरण मिति लोकवेदयोः करणतया प्रसिद्धायाः कर्तृत्वासंभवात्। उक्तंहि सूत्रकृता सू॥ शक्तिविपर्ययादिति। तस्यार्थः परै रेव मुक्तः। बुद्धेः करणशक्ति र्हीयेत कर्तृशक्ति श्चापद्येत। सत्यांच कर्तृशक्तौ तस्याएवाऽहंप्रत्ययविषयत्वं स्यात्। अहंकारपूर्विकायाएव प्रवृत्तेः सर्वत्र दर्शनात्। अहं गच्छा म्यह मागच्छामीति। तस्याश्च कर्तृशक्तियुक्ताया स्सर्वार्थकारि करण मन्य त्कल्पनीयं। शक्तोपिहि कर्ता लोके करण मुपादाय प्रवर्तत इति। ततश्च नाममात्रे विवाद स्य

न्न वस्तुभेदः । कस्यचि त्करणव्यतिरिक्तस्य कर्तृत्वाभ्युपगमा दिति ।

तस्मा दंतःकरणव्यतिरिक्तस्य जीवस्यैव स्वाभाविककर्तृत्वाऽनति वृत्ते र्जीवस्याऽकर्तृताभिधानं सूत्रविरुद्ध मेव ।

ननु , श्रु ॥ असंगोऽह्ययं पुरुष इति श्रुत्या आत्मनि सर्व संबंधाभावप्रतिपादना न्निमित्तादिसंबंधाभावे कथ मात्मनि कर्तृत्व मितिचे न्न । अस्याश्श्रुतेः स्वप्ने कामाभावप्रतिपादकत्वेन संबंधाभावप्रति पादकत्वाभावात् ।

तथाहि , श्रु ॥ अत ऊर्ध्वं विमोक्षाय ब्रूहीति जनकेन मोक्षोपायं पृष्टो याज्ञवल्क्यः, ससंगेन कृतस्यैव कर्मणो बंधकत्वात् संग त्यागः कर्तव्य इत्यभिप्रेत्य संगाभावे कर्मणो बंधकत्वाभावं प्रदर्शयति । सवा एष एतस्मिन् संप्रसादे रत्वा चरित्वा दृष्ट्वैव पुण्यंच पापंच पुनः प्रतिन्यायं प्रतियोन्या द्रवति स्वप्नायैव सय तत्र किं पश्य त्यनन्वा गत स्तेन भव त्यसंगोऽह्ययं पुरुष इति । अस्यार्थः । स एष प्रकृतो विज्ञानमयः । तस्मिन् संप्रसादे पूर्वोक्ते स्वप्ने । यद्यपि संप्रसादशब्द स्सुषुप्तिवचन स्तथापि सुषुप्तौ रत्यादे रभावात् स्वप्नः परिगृह्यते । रत्वा स्त्रीपुत्रादिभी रति मनुभूय चरित्वा नानादेशसंचरणं कृत्वा दृष्ट्वैव पुण्यंच पापंच कर्म येनैव मार्गेण यस्मा द्देहा न्निर्गत स्तेनैव मार्गेण मनुष्यादिदेह मागच्छति स्वप्नायैव । स य त्तत्र पूर्वस्मिन् स्वप्ने पुण्यं पापंवा कर्म पश्यति तेनाऽनन्वागतो भवति । तत्र हेतु रसं गोह्हीति । यत स्तत्र पूर्वस्मिन् स्वप्ने असंगोऽ कामः अत स्त न्नानुगच्छतीति ।

ननु , स्वप्ने अकामत्व मसिद्धं । स ईयते अमृतो यत्र काम मिति कामस्य श्रवणा दित्याशंकायां कामाभावसाधनार्था अपरा खंडिका श्रु ॥ सवा एष एतस्मिन् स्वप्ने रत्वा चरित्वा दृष्टैव पुण्यंच पापंच पुनः प्रतिन्यायं प्रतियोन्या द्रवति बुद्धांतायैव सय त्तत्र किंचित् पश्य त्यनन्वागत स्तेन भव त्यसंगो ह्ययं पुरुष इति । बुद्धांताय जागरिताय शेषं स्वप्नवत् ।

यदिहि स्वप्ने काम स्स्यात् तर्हि ससंगेन कृतं कर्म जागरे प्यनुवर्तेत । नच त दनुवर्तते । नहि स्वप्नकृते नैनसा आगस्कृत मात्मानं मन्यते प्रतिबुद्धः । नापि स्वप्ने मया आगस्कृतमिति स्वप्न दृशो वाक्यं । तच्छ्रुत्वा निंदति परिहरति बोधकः । तस्मा न्नास्त्येव स्वप्ने कामः । तदिदं तैर प्युक्तं , असंगोऽह्ययं पुरुष इति असंगता अकर्तृत्वे हेतु रुक्ता 'उक्तंच स ईयते अमृतो यत्र काम मिति संगश्च कामः अत स्सिद्धो हेतु रसंगत्वा दकर्तेति ।

'ननु सिद्धोऽय मुच्यते स्वप्ने कामस्य दृष्टत्वा द्यत्र काममिति श्रुतेः इत्यस्य परिहाराय सवा इत्यादिकं वचः इत्यादिवार्तिके संगकाम शब्दयोः पर्यायत्वा दित्यानंदगिरिः । एवंच स्वप्ने कामाऽभावे तत्प्रति भानं रथादिभानवत् जाग्रत्कालिककामविषयं मंतव्यं । नचाऽ संगवाक्या ज्जाग्रत्यपि कामो नेति शंक्यं । जाग्रत्यपि कामाभावे स्वप्नेऽपि तदनुभवानुपपत्तेः जागद्दृष्टस्यैव स्वप्नेपि भानात् । यानि ह्येव जाग्र त्पश्यति तानि सुप्त इति श्रुतेः । यदेव जाग्र द्भयं पश्यति। तदत्राऽविद्यया मन्यते इतिच । अतएव सवा एष एतस्मिन् बुद्धांते रत्वा चरित्वा दृष्टैव पुण्यंच पापंच पुनः प्रतिन्यायं प्रतियोन्या द्रवति

स्वप्नांतायैवेति जागरितवाक्येऽसंगइति न श्रूयते । चाऽन्तःकरणतएव जागरितुं शक्यं तस्याऽचेतनत्वेन कामासंभवात् । त दिद मुक्तं सूत्रकृता कामाच्च नाऽनुमानापेक्षेति ।

नच, स्वप्ने कर्माभावादेव तदननुगतिः नतु कामाभावा दिति शंक्यं श्रु ॥ आत्मनैवाऽयं ज्योतिषास्ते पल्ययते कर्म कुरुत इति स्वप्ने कर्मण श्श्रुतत्वात् देवतादर्शनादिकर्मण स्संभवात् अचेतनत्वाच्च धियः कर्तृत्वानुपपत्तेः तदप्युक्तं परैरेव सू ॥ गुहां प्रविष्टा वात्मानौही त्यत्र, वस्तुतो नैकस्यापि कर्तृत्वं बुद्धे रचेतनत्वात् आत्मनो निर्व्यापारत्वा च्चेति । नहि निर्व्यापारत्वं प्रामाणिकं अहं करोमीति व्यापारस्याऽऽत्मनि प्रत्यक्षसिद्धत्वात् । सू ॥ आत्मनिचैवं विचित्राश्चहीति विचित्र नानापरिणामस्य सूत्रितत्वाच्च । तस्मा दात्मनः स्वाभाविकमेव कर्तृत्वं । नच कर्तृत्वस्य वह्न्यौष्ण्यवत् स्वाभाविकत्वे सुषुप्त्यादौ न तदभावस्स्या दिति चोद्यं, नहि स्वाभाविकत्वं यावद्द्रव्यभावित्वं किं त्वनारोपितत्वं । घटे पाकजलौहित्यादे र्यावद्द्रव्यभाविनो प्यनौपाधिकत्वेन स्वाभाविकत्वस्य सर्वसम्मतत्वात् । बदरफलादौ श्यामत्वकठोरत्वयो रयावद्द्रव्यभाविनोर प्यनौपाधिकत्वाच्च ।

नच, श्रु ॥ ध्यायतीव लेलायतीवेति श्रुत्या कर्तृत्वस्या रोपितत्वावगमा दौपाधिकत्वं प्रतीयत इति वाच्यं, अत्रहि, ध्यानादे रभावा दिवशब्दप्रयोगः नतु कर्तृत्वाभावात्

अतएव, यत्र क्रियास्ति तत्र नेवशब्दप्रयोगः उभौ कृत्वा वनुसंचरतीति । तस्मा ज्जीवस्य कर्तृत्व मनौपाधिकमेव त्यलं ।

ननु , जीवस्य ज्ञातृत्व मयुक्तं तस्य ज्ञानरूपत्वा दितिचे न्न। सू ॥ ज्ञोऽतएवेति सूत्रेण तस्य ज्ञातृत्वस्य सूत्रितत्वेन ज्ञानरूप त्वस्य सूत्रविरुद्धत्वात् ।

## —: अणुत्वपरिष्कारः :—

ननु ॥ जीवस्य विभुत्वाभ्युपगमा त्तस्याऽणुत्वं न युज्यत इतिचे न्न । सू , उत्क्रान्तिगत्यागतीनामिति तस्याऽणुत्वस्याऽऽचार्येण सिद्धान्ति तत्वेन विभुत्वस्याऽपसिद्धान्तत्वात् ।

नच , अणुत्वेन पूर्वपक्ष कृत्वा तद्गुणसारत्वादिति महत्त्वेन सिद्धान्तित मिति शङ्क्यं , तस्य महत्त्वप्रतिपादकत्वाभावात् ।

तथाहि , कथ मस्य सूत्रस्य प्रवृत्तिरिति चिन्त्यते , किं जीवस्य ज्ञानगुणकत्वे ज्ञानाभेदव्यदेशस्य का गतिरि त्याकांक्षया मिद म्प्रवृत्तम् ? उत जीवस्य महत्वे सिद्धे । अणुत्वादिव्यपदेशस्य का गति रित्याकांक्षाया मिद म्प्रवृत्तम् ? अत्र ज्ञानाभेदव्यपदेशस्य का गतिरि त्याकाकांक्षाया मिदं प्रवृत्त मित्येव युक्तम्।

तथाच , उत्क्रान्तिगत्यागतीना मिति स्वात्मनाचोत्तरयो रितिच । जीवस्याऽणुत्वे साधिते, श्रु ॥ सवा एप महा नज आत्मेति महत्वश्रुते र्नाऽणुत्व मिति शङ्काया म्महत्वश्रुते र्ब्रह्मविषयत्वा न्नाणुत्वविरोध इति । सू ॥ नाणु रतच्छ्रुते रितिचे न्नेतराधिकारा दित्युक्त्वा । पुनश्च स्वशब्दोन्मानाभ्याञ्चेति चाऽणुत्वमेव स्थिरीकृत्य जीवस्याऽ णुत्वे कथं सकलशरीरव्यापिकार्य मिति शङ्कायां। सू ॥ अविरोध श्चन्दन

वदिति चन्दनबिन्दो श्शरीरैकदेशस्थस्यापि सकलशरीरव्याप्याह्लादकारित्ववत्। जीवस्या प्युपपद्यत इत्युक्त्वा पुनरपि चन्दनबिन्दो रेकदेशस्थत्वस्य प्रत्यक्षसिद्धत्वा त्तत्र तथा भवतु। इहतु जीवस्य एकदेशस्थत्वे प्रमाणाऽभावात् सकलदेहव्याधिकार्यानुरोधेन व्यापित्वमेव किं न स्यादि त्याशङ्क्य। सू॥ अवस्थितिवैशेष्या दितिचे न्नाऽभ्युपगमात् हृदिहीतिसूत्रेण जीवस्यापि सवा एष आत्मा हृदीत्यादि श्रुत्या शरीरैकदेशहृदयस्थत्वस्य प्रमाणसिद्धत्वा च्चन्दनबिन्दुन्यायेनैव कार्यकरत्वं युज्यत इत्युपपाद्य ततोपि सू॥ गुणाद्वा लोकवदि त्यणोरपि जीवस्य चैतन्यगुणव्याप्त्या व्याप्यकार्यकरत्व मुपपाद्य। तदनन्तरम्।

ननु, कथ ङ्गुणस्य गुणिव्यतिरेक इ त्याशङ्कायाम् व्यतिरेको गन्धवदिति गन्धवत् चैतन्यस्य व्यतिरेक मुपपाद्य। अथ चैतन्यस्य गुणत्वे स्या देतदेवं नतु चैतन्य ङ्गुणः। किन्तु, स्वरूपमेव।

तथाच, तस्य व्यापित्वे आत्मनएव व्यापित्व मायात मित्याशङ्कायाम्। सू॥ पृथ गुपदेशादिति सूत्रेण श्रु॥ प्रज्ञया शरीरं समारुह्येति ज्ञानात्मनो र्भेदोपदेशात् न स्वरूपं ज्ञानम्। किन्तु गुणएवेति राद्धान्तितम्। यद्येवम्। विज्ञानस्य गुणत्वे। श्रु॥ विज्ञानं यज्ञ न्तनुतइति कथ मात्मनि ज्ञानाभेदव्यपदेश इत्याकाङ्क्षाया मिद मप्रवृत्तम्। सू॥ तद्गुणसारत्वा त्तद्व्यपदेशः प्राज्ञव दिति।

अत्र तच्छब्दद्वयेन पूर्वप्रकृतं ज्ञानमेव गृह्यते सर्वनाम्ना मप्रकृत परामर्शित्वात्। सचाऽसौ गुणश्चेति कर्मधारयः। तद्गुण स्सारो यस्य स तद्गुणसारः तस्य भाव स्तत्त्वम्। तस्मा त्तद्व्यपदेशः लवणगुण सारस्य सैंधवस्य लवणमिति व्यपदेशव त्प्राज्ञवदिति, सर्वज्ञ स्वयं

रस्य ज्ञानगुणसारत्वात् ज्ञानमिति व्यपदेशः ॥ श्रु ॥ प्रज्ञानं ब्रह्मेत्यादौ तद्वदिति अयमेवाऽर्थो युक्तः । तस्मा ज्जीवस्य ज्ञानगुणकत्वे ज्ञानाऽभेद व्यपदेशस्य का गतिरि त्याकांक्षाया मिदं सूत्रं प्रवृत्त मित्येव युक्तं । यदि पूर्वं जीवस्य महत्वे प्रतिज्ञाते प्रमाणे चोपन्यस्ते यद्यात्मा महान् तर्हि तस्याऽणुत्वव्यपदेशस्य का गतिरि त्याकांक्षा भवे न्नच पूर्वत्राऽऽत्मनो महत्वं प्रतिज्ञातं न प्रमाणं चोपन्यस्तं कथ मकस्मा दाकांक्षा भवेत् ।

नच, ब्रह्मणो महत्त्वा त्तदभेदा ज्जीवस्य महत्व मुक्तप्राय मेवेति शंक्यं । एवंहि सू ॥ नाऽणु रतच्छ्रुते रिति चे न्नेतराधि कारादिति सूत्र मनुपपन्नमेव स्यात् । तद्धि सूत्रं श्रु ॥ सवा एष महा नज आत्मेति श्रुत्या जीवस्य महत्वप्रतीते र्नाणुत्व मिति शंकाया म्महत्वश्रुते र्ब्रह्मविषयत्वा न्न जीवस्य महत्वमिति प्रतिपादनाय प्रवृत्तं । यदिहि ब्रह्ममहत्वेनैव जीवमहत्वं सिद्ध्ये त्तर्हि कथं नेतराधिकारा दित्यनेन जीवमहत्वशंकायाः परिहारः कृतो भवेत् । तस्मा त्पूर्वं जीवे महत्व प्रतिज्ञायाः प्रमाणस्यचाऽनुपन्यासा न्नणुत्वव्यपदेशस्य का गतिरित्या कांक्षाया मिदं सूत्रं प्रवृत्तमि त्ययुक्तमेव ।

ननु, अद्वैतसिद्धिकारैः "सवा एष महा नज आत्मेति श्रुतिप्रामाण्येन जीवमहत्वं समर्थित मितिचे न्न । नाणु रतच्छ्रुते रिति सूत्रकृतैव प्रकृतश्रुते र्ब्रह्ममहत्त्वप्रतिपादकत्वनिर्धारणेन जीवविषयत्वभ्रान्ते र्निर्धूतत्वात् ।

सूत्राऽर्थोपि परमतेऽसमंजसएव । एवंहि तन्मते सूत्रार्थः "प्रथमेन तच्छब्देन अंतःकरणं गृह्यते तस्य गुण स्तद्गुण इति षष्ठीसमा

सश्च। द्वितीयेन तच्छब्देन अणुत्वादिकं परामृश्यते। तथाचोऽतः कर णगुणसारत्वा त्तद्व्यपदेशः प्राज्ञवदिति। नहि प्रथमेन तच्छब्देनाऽन्तः करणग्रहणं युक्तं तस्याऽप्रकृतत्वात्। प्रकृतवचनत्वा त्तच्छब्दस्य। षष्ठीसमासे लुप्तपञ्चम्यर्थे पूर्वपदस्य लक्षणाश्रयणं दोषः। द्वितीयतच्छब्देन व्यवहिताऽणुत्वपरामर्शो दोषः। अंतःकरणगुणसारत्वा दि त्यसिद्धश्च हेतुः। नहि जीवस्यांऽतःकरणगुणोपाधित्वं लोके सिद्धं। न केनचि दभ्युपं गम्यते। नैव दृष्टांते प्राज्ञे अन्तःकरणगुणोपाधिकत्व मस्ति। नापि प्राज्ञ महत्वेन जीवमहत्व मभ्युपगच्छतः प्राज्ञजीवयो र्दृष्टांतदार्ष्टांतिकभावोवा संभवति। उत्तरसूत्रम प्यस्मत्पक्षाऽनुगुणमेव। यावदात्मभावित्वाच्च न दोष स्तद्दर्शनादिति। ज्ञानस्य मुक्ताव प्यभ्युपगमेन यावदात्म भावित्वस्य तत्र संभवात्।

नच, सुषुप्त्यादौ ज्ञानाऽभावात् कथं यावदात्मभावित्व मिति वाच्यं, मनस्त्वादिव त्तस्य सतोऽभिव्यक्तियोगा दिति कार णात्मना सतएव कार्यात्मना प्रबोधा दनभिव्यक्तेः परिहृतत्वात्। त्वत्पक्षे त्वंतः करणस्य मुक्तौ निरन्वयनाशेन यावदात्मभावित्वाऽसंभव एव। यावत्संसार्यात्मभावित्वा दिति संकोचस्य स्वयमेव दर्शितत्वात्।

तथा, नित्योपलब्ध्यनुपलब्धिप्रसंगोऽन्यतरनियमोवाऽन्य थेति विपक्षबाधकमूल मस्मत्पक्षाऽनुगुणमेव।

तथाहि, आत्मनोऽणुत्वं ज्ञानगुणकत्वंच साधितं। त द नंगीकारे आत्मनो विभुत्वे ज्ञानस्वरूपत्वेच विभुना आत्मचैतन्येन विषयस्य नित्यसंबंधा न्नित्योपलब्धिप्रसंगइति। त्वत्पक्षे त्वंतःकरणाऽ नंगीकारे आत्मेंद्रियविषयाणां सन्निधानेसति नित्योपलब्धिः स्या दिति

संकोचनीयत्वात् । तस्मा दणुत्वमेव सूत्रार्थइति महत्वप्रतिपादनं जीवस्य सूत्रविरुद्धमेव ।

ननु, सू ॥ तद्गुणसारत्वा त्तद्व्यपदेशइत्यत्र तुशब्देन पूर्वसूत्रैः प्रतिपादितं जीवाऽणुत्वं प्रत्याख्यात मितिचे त्त दसत् । कंठरवेण दशसूत्र्या निर्धारितस्याऽर्थस्य तुशब्देन व्यावर्तयितु मयुक्तत्वात् । पर कीयात् पुरातने भाष्ये श्रीकंठीये प्रकृतसूत्रे तुशब्दस्यैवाऽभावेन वैयासिकसिद्धांतव्यावर्तनपरैः परैरेव तुशब्दस्य प्रक्षिप्तत्वाऽ वगमाच्च ।

एवंच, वैयासिकसमयपूर्वपक्षभूतएव जीवमहत्ववादः परै स्सिद्धांतीकृतइति सर्व मनवद्यं ।

## —: भेदपरिष्कारः :—

——:o:——

ननु, जीवस्य ब्रह्माऽभिन्नतया ब्रह्मण स्सहजं विभुत्वादिक मस्यापि सिद्ध मितिचे न्न । ज्ञानशक्तिकर्मोपास्योपासक शुद्धाशुद्ध मुक्तामुक्तभेदा ज्जीवस्य ब्रह्मणोऽर्थांतरत्वनिश्चयात् । अत्र यदुक्तं संसा रिण ईश्वरा दनन्या इति त न्न । लक्षणभेदा दश्वमहिषवत् जीवपरयो र्भेदस्य सहजसिद्धत्वात् ।

तथाहि, ईश्वरस्य ताव न्नित्यं सर्वविषयं ज्ञानं सवितृप्रका शवत् । तद्विपरीतं संसारिणां खद्योतस्येव ।

किंच, शक्तिभेदोपि तथैव। तथाच, नित्या सर्वविषया चेश्वरशक्ति र्विपरी तेतरस्य । कर्मच आत्मसत्तामात्रनिमित्त मीश्व रस्य, औष्ण्यस्वरूपद्रव्यसत्तामात्रनिमित्तदहनकर्मवत् । राजा ऽयस्कांतप्रकाशकर्मवच्च विपरीत मितरस्य । श्रु ॥ उपासीतेतिवचना

दुपास्य ईश्वरः गुरुराजवत्। उपासक श्चेतरः शिष्यभृत्यवत्। अपहत पाप्मत्वश्रवणा न्नित्यशुद्ध ईश्वरः। पुण्योवै पुण्येनेतिवचना द्विपरीत इतरः।

अतएव, नित्यमुक्तए वेश्वरो नित्यशुद्धियोगा त्संसारी चेतरः। तस्मा ज्जीवो ब्रह्मणोऽर्थांतर मित्येव युक्तं। यदुक्त मन्न परैः, बुद्ध्यादिभ्यो विलक्षणा श्चेश्वरा द्भिन्नलक्षणा आत्मानो न संतीति। तत् प्रतिज्ञामात्रमेव बुद्ध्यादिव्यतिरिक्तानां तद्विलक्षणाना मात्मनां सू॥ कर्ता शास्त्रार्थवत्वा दित्यादिना निर्धारितत्वात्। सू॥ स्थित्य दनाभ्यां चेत्यादिना जीवाना मीश्वरवैलक्षण्य स्योपपादितत्वाच्च। ततोपि यदुक्तं, बुद्ध्यादिकल्पितात्मव्यतिरेकाऽभिप्रायेणतु लक्षणभेदा दित्या श्रयाऽसिद्धो हेतुः ईश्वरा दन्यस्यात्मनोऽसत्वात् सौक्ष्म्यचैतन्यसर्वगत्वाद्य विशेषेच भेदहेत्वभावा दितिच, तद प्ययुक्तं। सू॥ उत्क्रांतिगत्यागतीना मिति जीवेऽणुत्वस्याऽवधारितत्वेन सर्वगत्वस्य प्रमाणविरुद्धत्वात्। चैतन्य स्योभयगतत्वेपि श्रु॥ ज्ञाऽज्ञौ द्वावितिश्रुत्या वैषम्य स्याऽऽम्नात त्वेन जीवेश्वराऽभेदस्य श्रुतिसूत्राविप्रतिपिद्धत्वाच्च। ईश्वरा दन्यस्याऽऽ त्मनोऽसत्वे तस्यैव विरुद्धलक्षणत्वस्याऽयुक्तत्वाच्च।

ततश्च यदुक्तं, ईश्वरस्यैव विरुद्धलक्षत्व मयुक्त मितिचे न्नुखदुःखादियोगश्च। न। निमित्तत्वेसति लोकदृष्टिविपर्यये णो दयाऽस्तमयाऽहोरात्रादिकर्तृत्वाऽध्यारोपणा त्सवितृवत्।

यथाहि, सविता नित्यप्रकाशरूपत्वा ल्लोकाऽभिव्यक्त्यनभि व्यक्तिनिमित्तत्वेसति लोकदृष्टिविपर्यये णोदयाऽस्तमयाऽहोरात्रादिकर्तृत्वा ध्यारोपभा ग्भव त्येव मीश्वरे नित्यविज्ञानशक्तिरूपे लोकाज्ञानाऽपोहसुख

दुःखस्मृत्यादिनिमित्तत्वेसति लोकविपरीतबुध्यध्यारोपितं विपरीत लक्षणत्वं । सुखदुःखादयश्च न स्वतः । आत्मदृष्ट्यनुरूपाऽध्यारोपाच्च यथा घनादिविप्रकीर्णेऽम्बरे येनैव सवितृप्रकाशो न दृश्यते स आत्म दृष्ट्यनुरूपमेवाऽध्यस्यति । सवि तेदानी मिह न प्रकाशयतीति । सत्येव प्रकाशेऽन्यत्र भ्रांत्या । एव मिह चौद्धादिवृत्त्युद्भवाऽभिभवाऽऽकुलभ्रांत्याऽ ध्यारोपितः सुखदुःखादियोग उपपद्यतइति तदप्यसारं । लोकस्याऽ ज्ञानास्पदतया तस्य भ्रांत्या सवितरि विपरीतलक्षणत्वाऽध्यारोपसंभवेपि भवन्मते ब्रह्मणोद्वितीयत्वेन तत्र भ्रांते दुरुपपादतयाऽध्यारोपाऽसंभवात् । ब्रह्म ण्यध्यारोपमंतरेण लोकस्यैवाऽसिद्ध्या लोकविपरीतबुद्ध्या ब्रह्मणि विपरीतलक्षणत्वाऽध्यारोप स्याऽऽत्माश्रयदोषदूषितत्वेन हासावहत्वाच्च । तस्मा त्सर्वप्रमाणसिद्धजीवपरभेदस्य काल्पनिकत्वोपपादनप्रयासो विफल इति दिक् ।

नन्वेवं, जीवपरयो र्भेदस्य पारमार्थिकत्वाऽभ्युपगमे ऐक्योप-देशपरा स्सूक्तयो व्याकुप्येयु रितिचे न्न । जीवपरयो रैक्यस्याऽ श्रुतत्वात् ।

नच, परेऽव्यये सर्व एकीभवंतीति वचन मैक्ये प्रमाण मिति चोद्यम्, गाव स्सायं गोष्ठ एकीभवंति । एकीभूता नृपा सर्वे ववर्षुः पांडवं शरैः । कीटो भ्रमरे णैकीभूत इति स्थानैक्यमतैक्यसादृश्य निबंधनैकीभावस्य गोनृपादिषु दर्शना दत्रापि तैरेव निमित्तै रेकीभावस्य गौणत्वात् । नापि मुख्यत्वे संभवति गौणत्व मयुक्त मिति वाच्यं । ऐक्यस्य सर्वप्रमाणविरुद्धतया मुख्यत्वाऽसंभवे गौणत्वग्रहणस्यैव युक्त

तरत्वात् । भवत्पक्षे ऐक्यस्य पूर्वसिद्धतया अभूततद्भावार्थकच्विप्रत्ययस्याऽयुक्तत्वाच्च । यत्त्वत्र स्वगृहस्थिताऽज्ञातनिधिवत् सतो प्यावृतत्वेन अभूतसद्दक्षतया च्विप्रत्ययोपपत्ति रित्युक्तं । त दयुक्तं । तदापि गौणत्वाऽनतिवृत्तेः । परेऽव्यय इति श्रुतसप्तमीत्यागाऽश्रुततृतीयाकल्पना रूपदोषतादवस्थ्याच्च ।

नच , श्रुत्यंतराऽनुसारेण सप्तम्या अननुसरणीयत्वा दिति चोद्यं , परमं साम्य मुपैति । परा त्परं पुरुष मुपैतीतिच पूर्ववाक्य ुपरोधापत्तेः । श्रुत्यंतराणां सर्वेषामपि सप्तमीपाठाऽनुगुणत्वेन भव दुक्तार्थस्य सर्वश्रुतिविप्रतिपिद्धत्वाच्च ।

ननु , यद्येवं । श्रु ॥ मृत्यो स्स मृत्यु माप्नोति य इह नानेव पश्यतीति सूक्ति र्भेदं व्यपोहयंती पीड्येतेतिचे न्न । तस्य नियंतृंतरप्रतिषेधकतया परमेश्वरैकत्वप्रतिपादकत्वेन जीवपरभेदप्रतिषेधकत्वाऽसंभवात् ।

अन्यथा , प्रकृतसूक्तिघटितायां कठोपनिषदि । मंतृमंतव्यत्वेन बोद्धृबोद्धव्यत्वेन प्राप्तृप्राप्तव्यत्वादिनाच बहुधा जीवपरयो र्भेदं प्रतिपादयंत्यो बहव्य स्सूक्तयः पीड्येरन् सू ॥ विप्रतिपेधे भूयसां स्या त्स्वधर्मत्व मिति न्यायाऽनुरोधेन बहुवाक्यप्रतिपादितजीवपरभेदविप्रतिपिद्धस्य , नेहनानास्तीति वचनस्याऽऽनर्थक्यमेव प्रसाधितं भवेत् ।तस्मा द्यथोक्तमेव युक्तं ।

ननु , जीवपरयो र्भेदाऽभ्युपगमे तत्त्व मसीति तयो रभेदोपदेशः पीड्येतेतिचे न्न । प्रकृतसूक्तिघटितेपि छांदोग्ये श्रु ॥ इमानि भूता न्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यांति । इमानि

भूतानि प्राणमेवाऽभिसंविशंति । सर्वाः प्रजा स्सत आगम्य न विदु स्सत आगच्छामह इत्यादिना बहुधा जीवपरयो राधाराधेयादिभेदोप देशपरा स्सूक्तयोऽनंता व्याकुप्येयुः । तदन्यथानुपपत्त्या त त्त्व मसीति सूक्तिः परमेश्वरांऽतरात्मकतामेव बोधयती त्ययमेव वेदार्थः अन्तर्यामिब्राह्मणादिसर्वश्रुतितात्पर्याऽनुरुद्धइति ब्रह्मपथे वेदपथे सविस्तर मुपपादितइति नेह पुनः ।

नन्वेवं, अहं ब्रह्मास्मि त्वंवा अह मस्मि भगवोः देवते अहंवै त्व मसीति योऽन्यां देवता मुपास्तेऽन्योऽसा वन्योऽह मस्मीति न स वेद यथा पशु रित्येव माद्यै न्यैक्योपदेशपराणि वाक्यानि व्याकुप्येयु रितिचे न्न । सू ॥ आत्मेति तूपगच्छंति ग्राहयंतिचेति आत्मत्वोपासनाधिकरणे निगमांतोपदिष्ट स्यैक्य स्योपासनाविषयत्वाऽवधारणेन पारमार्थिकत्वाऽनवगमात् ।

नच , तत्र जीवपरयो रैक्यं पारमार्थिकतयैव निर्धारित मिति शक्यम् , सू ॥ अधिकन्तु भेदनिर्देशात् । सुषुप्त्युत्क्रान्त्यो र्भेदेन इत्यादिना बहु ष्वधिकरणेषु जीवपरभेदस्याऽवधारितत्वेन तद्विरोधात् । वेदान्ते षूपक्रमोपसंहारयो र्विद्युपास्त्यो र्व्यतिरेके णोपदेशेन छागपशुन्यायेन मोक्षसाधनभूतस्य वेदन स्योपासनारूपत्वाऽवगमेन वेदान्तोपदिष्ट स्यैक्यस्यापि तद्विषयत्वाऽवश्यंभावाच ।

ननु , उपासितु र्थान्तरत्वे परमेश्वरस्य तदभेदे नोपासन मफल मितिचेत् । उच्यते । यद्य प्युपासितु र्भिन्नएव परमेश्वरः । तथापि, मान्त्रिका द्भिन्नो गरुडइव । चिरनिरन्तरासेविताऽभेद भावनादृढसंबन्धेन स्वस्वरूपत्वेनाऽनुगृह्णाति । यथा गरुडः विषसंहरण

सामर्थ्यविशेषप्रदानेन मन्त्रिणोऽनुगृह्णाति । तथा परमेश्वरः पशुत्वनिवृत्तिरूपफलप्रदाने नोपासका ननुगृह्णाती त्यभेदोपासनस्य सार्थक्य मुपपद्यते।

नचैवमपि, त त्त्व मसी त्यभेदोपदेश श्चारितार्थ्यं न लभेतेति शङ्क्यम्, आत्मत्वोपासनाधिकरणएव, ग्राहयन्ति चेति वचनेन उपासितार श्शिष्यानपि त त्त्व मसीत्यादिना अभेदोपासनं बोधयन्ती त्याचार्येण स्वात्मनि ब्रह्मदृष्टिविधिपरतया निर्धारितत्वात्।

नच, तस्य विद्याविधिपरत्वे प्रतिखंड मभ्यासेन विद्याभेदः स्या दिति शङ्कनीयम्, प्रथमखण्डएव स्वात्मनि ब्रह्मदृष्टौ विहितायां, द्वितीयादिखंडेषु शंकाविशेषनिराकरणपूर्वकं तदनुवादइति सू ॥ सैवहि सत्यादय इत्यधिकरणे समर्थितत्वात्। अनुवादश्च सद्रूपं ब्रह्माऽस्मीति भावनया तवापि ब्रह्मात्मता स्फुटीभविष्यती त्येतद्दार्ढ्यार्थः वर्तमान सामीप्ये वर्तमानप्रत्ययः तता प्यभ्यासो भावनासाध्याऽभेददार्ढ्यार्थः ।

ननु, जीवब्रह्मणो र्भेदा दहंब्रह्माऽस्मि शिवोऽह मस्मि इत्यादि भावना भ्रमरूपा स्यात्। सा कथं मुक्तिहेतु रिति चे न्न।

यथा, कीटस्य कीटत्वनिवृत्तिपूर्वकभ्रमरत्वप्राप्ति र्भ्रमराऽहंभाव साध्या। एवं पशोः पशुत्वनिवृत्तिपूर्वकनिरस्तसमस्तदोषकल्याणगुणा विर्भावरूपशिवत्वप्राप्ति श्शिवाऽहंभावसाध्येति देवो भूत्वा देवा नप्येतीति श्रुते रवसीयते। नच, श्रुतिप्रतिपन्नेऽर्थे काचि दनुपपत्तिः। अतए वोक्तं भाष्ये ब्रह्मभावे नोपासन मुपासकस्य मुक्तिकर मिति। ततएवच श्रीसुदर्श नाचार्यचरणैरपि श्लो॥ अद्वैत मागमशिरोभि रुपासनाया मुक्तं तदेव परमार्थतया न वाच्य मित्युक्तं ।

नच, मुक्तौ भेद स्येष्टत्वेन तद्भेदे नोपासनं तद्भेदयुक्त मुक्तिकर मित्ययुक्तमिति शंक्यं, श्रु ॥ निरंजनः परमं साम्य मुपैतीति श्रुतेः मुक्तिदशायां भेदेपि ब्रह्मणा परमसाम्य स्येप्सिततमत्वेन तद्भेदभावनाया भ्रमरकीटन्यायेन तत्साम्यसाधकत्व स्योपपादितत्वात्।

किंच, सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनीति श्रुतेः जीवे परमात्मनः परमात्मनि जीवस्यच परस्पर मुभयो राधाराधेयभावश्रवणा दन्योन्याऽविनाभावबीजम् श्रु ॥ यस्यात्मा शरीर मित्यादिश्रुते श्शरीर शरीरिभावनिबंधनंवा नित्यसंबंधित्व मे वैक्योपदेशा बोधयंतीति न कथ मपि सर्वप्रमाणसिद्धभेदविप्रतिषिद्धाऽभेदस्य पारमार्थिकत्वाशाऽवकाश इत्यलं।

ननु, बृहदारण्यके, अहं ब्रह्माऽस्मीति सूक्ति रुपासनाप्रकरण गतत्वादैक्ये प्रमाण मितिचे न्न। आत्मे त्ये वोपासीत। आत्मानमेव प्रिय मुपासते। इत्यादिना प्रकृतप्रकरणे प्युपासनायाः प्रक्रांतत्वात्। तद्यो देवानां प्रत्यबुध्यत सएव त दभव त्त थर्षीणां तथा मनुष्याणा मिति भेद परवाक्यविशेषविरोधापत्तेश्च।

किंच, प्रकृतस्य ब्रह्मवाक्यत्वे नाऽनेन वाक्येन जीवब्रह्मणो रैक्यस्याऽसिद्धेश्च।

नच, तद्यो देवानामिति पूर्ववाक्ये न स वेदेति निंदा वाक्येच वेदनस्यैव निर्देशा त्तन्मध्यस्थितोपास्तेरपि ज्ञानपरत्वाऽवश्यं भावइति चोद्यं, पूर्ववाक्यस्य ब्रह्मविषयत्वात् योऽन्यां देवता मित्यादिवाक्य स्योपासनाविषयत्वाच्च समानविषयत्वाऽभावे नोभयो निर्णयनिर्णायकभावस्याऽनुपपन्नत्वाम्। छागपशुन्यायेन प्रत्यबुध्यत

वेदेतिच ज्ञानसामान्यवाचिनो द्वयोरपि पदयो रुपासिपरत्वस्यैव न्याय्यत्वाच्च ।

ननु , नेह नानास्तीति भेदनिषेधात् एकमेवाऽद्वितीयमि त्येवकारे णैकांतिकैक्यबोधनाच्च भेदस्याऽनिर्वचनीयत्वमेव सिध्यतीति वाच्यं , नेह नानास्तीतिश्रुते र्नियंत्रंतरप्रतिषेधकतया अद्वितीयश्रुते रभिन्ननिमित्तोपादानत्वप्रतिपादनमात्रविश्रांततयाच्च ताभ्यां भेदाऽनिर्वच नीयत्वबोधनाऽसंभवात् ।

ननु , भेदस्य मिथ्यात्व मापादितं परैः । कथं तस्य याथार्थ्य मभ्युपेय मितिचे न्न । मायाऽऽभासेन जीवेशौ करोति । माया ख्यायाः कामधेनो र्वत्सौ जीवेश्वरा वुभा वित्यादिवचनाऽभ्युपगमेन जीवेशयो रेवाभासमात्रतां मिथ्याभूतमायाकल्पिततया परममिथ्याभूत तांचाऽभिमन्वानानां तेषां जीवेश्वरविषयभेदमिथ्यात्वस्याऽभिमतत्वेपि जीवे शयोः पारमार्थिकता मभ्युपगच्छता मस्माकं तद्गतभेदस्यापि पारमार्थि कतया भेदमिथ्यात्वस्याऽनुपादेयत्वात् ।

अतएव , श्रु ॥ द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयो रन्यः पिप्पलं स्वाद्वत्ति अनश्न न्नन्यो अभि चाकशीति । य आत्मनि तिष्ठन् । नित्यो नित्यानां चेतन श्चेतनानां । अजो ह्येको जुषमाणोऽनुशेते जहा त्येनां भुक्तभोगा मजोऽन्यः । समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । यदा जुष्टः पश्य त्यन्य मीशं । पृथगात्मानं प्रेरितारंच मत्वा । इत्यादिश्रुतिभिः भेदस्य तात्त्विकत्व मवगम्यते ।

नच, श्रुतिबोधितस्य जीवपरभेदस्य कल्पितविषयत्वे नोपपत्तिरिति शंक्यम् । शब्दविषयस्येव तदर्थविषयस्यापि कल्पितत्वाऽभ्युपगमस्याऽऽस्तिकजनाऽ परिग्राह्यत्वात् ।

ननु, द्वासुपर्णेत्यत्र पूर्वार्थे न भेदः प्रमेयः अपदार्थत्वा दवाक्यार्थत्वाच्च इतिचे न्न । द्वित्वस्य स्वाश्रयप्रतियोगिकभेद समानाऽ धिकरणत्वनियमात् श्रुतद्वित्वाऽर्थापत्तिसमधिगम्यस्यापि भेदस्य श्रौतत्वाऽनतिवृत्तेः ।

नच, द्वौ चंद्रमसा वित्यत्रेव कल्पितभेदेनाऽप्युपपत्ति रिति शंक्यं, द्वौ चंद्रमसावितिवाक्यस्य पौरुषेयत्वा त्तत्र चंद्रगतभेदस्य प्रत्यक्षादिसर्वप्रमाणविरुद्धत्वाच्च कल्पितत्वाऽवगमेपि प्रकृतवाक्यस्याऽपौरुषेयत्वा दविरुद्धत्वाच्च कल्पितत्वाऽसिद्धेः । एतेन श्रु ॥ य आत्मनि तिष्ठन्नि त्याधाराधेयभावस्य, चेतनश्चेतनानामिति निर्धारणस्य, अज्ञोऽन्यइति भेदव्यपदेशस्यच काल्पनिकभेदपरत्वे नोपपत्तिरिति निरस्तं । यत्तु पुनः, प्रकृतेपि श्रु ॥ एकमेवाऽद्वितीयमि त्यद्वैतश्रुतिविरोधेन भेदश्रुतिः कल्पितभेदपरत्वेनैव संगमयितव्ये त्युक्तं तदयुक्तं । भेदप्रति पादकाऽनेकश्रुतिविरोधेनाऽद्वितीयश्रुते र्विशिष्टाऽभेदपरत्वाऽवगमेन भेदाऽभेदश्रुत्यो रुभयोरपि सांगत्यसंभवे भेदश्रुतीना मप्रामाण्यकल्पकल्पितत्वाऽभ्युपगमस्य वैदिकजनाऽनुपादेयत्वात् । यदपि अभेदश्रुतीनां प्रबलत्वेन तदविरोधाय भेदश्रुतीनां कल्पितभेदपरत्वमेव युक्तमि त्युक्तम् । त द प्ययुक्तं । निरवकाशत्वेन भेदश्रुतीनामेव प्रबलत्वात् ।

ननु, भेदश्रुतीनां व्यावहारिकभेदविषयत्वेन सावका शत्वा न्न प्राबल्य मितिचे न्न । व्यावहारिकभेदविषयत्वेऽप्रामाण्यापत्तेः ।

नच , अर्थवादवाक्यव त्प्रामाण्योपपत्ति रिति शंक्यं । अर्थवादवाक्यानां विध्यैकवाक्यतया प्रामाण्यसंभवेन् वैषम्यात् । भेद श्रुतीनां व्यावहारिकभेदपरत्वे प्रामाण्यस्य दुरुपपादत्वात् ।

किंच , मुक्तावपि भेदस्य प्रामाणिकत्वेन तस्य व्यावहारिक विषयत्व मयुक्तमेव ।

तथाहि , इदं ज्ञान मुपाश्रित्य मम साधर्म्य मागताः । सर्गेपि नोपजायंते प्रळये न व्यथंतिचेति । पंचथा सप्तथा इत्यादिना भेदोक्तेः परंज्योति रूपसंपद्य सू ॥ जगद्व्यापारवर्जं । भोगमात्र साम्यलिंगाच्च । इत्यादिसूत्रेषु प्रक्रांतब्रह्मविद्याफलस्यैव वक्तव्यतया भेदघटितस्यैव परममुक्तित्वाऽवश्यंभावात् । एतेन भेदस्य व्यावहारिक विषयत्वं निरस्तं । अन्यथा , मुक्तेरपि व्यावहारिकत्वापत्तेः ।

नन्वेवं , भेदश्रुतीनां व्यावहारिकविषयत्वऽसंभवेपि प्रत्यक्ष सिद्धभेदाऽनुवादरूपत्वेन हीनबलतया प्रबलतराऽभेदश्रुतिविरोधेन कल्पित भेदपरत्वमेव युक्त मितिचे त्त दयुक्तं । भेदश्रुतीना मनुवादरूपत्वस्य दुरुपपादत्वात् ।

तथाहि , घटपटयोः प्रत्यक्षसिद्धतया तद्गतोपि भेदः प्रत्यक्षेण सिध्यति । एवं जीवेशयोः प्रत्यक्षप्रमाणाऽविषयतया तद्गतोपि भेदः प्रत्यक्षस्याऽविषय इत्येव सांप्रतं । तस्मा द्भेदस्य प्रत्यक्षसिद्धतया श्रु॥ अग्नि र्हिमस्य भेषज मित्यादिवाक्यस्येव नाऽनधिगतार्थबोधकत्वेन प्रामाण्य मिति निरस्तं ।

किंच , ईशितु रप्रत्यक्षविषयतया तद्धर्मिकस्य तत्प्रतियोगि कस्यच भेदस्य प्रत्यक्षेण सिद्धि रसंभाविता । नचैवमपि , प्रत्यक्षसिद्ध

जीवधर्मिकेशभेदाऽन्यथानुपपत्तिसिद्धस्यापि भेदस्य श्रुताऽर्थापत्तिसिद्धस्य श्रौतत्वमिव प्रत्यक्षेण सिद्धि रुपपद्यतइति शंक्यं , द्विपदस्य श्रुतत्वेन तदर्थापत्तिसिद्धस्य भेदस्य श्रौतत्वसिद्धेः । प्रकृते जीवस्य प्रत्यक्ष सिद्धत्वेपि तत्र स्वाश्रयप्रतियोगिकभेदसमानाधिकरणस्य द्वित्वादे रननुभूत त्वेन वैषम्यात् । तस्मा द्भेदस्याऽनुवादरूपत्व मसिद्धं । एतेन भेदस्य तात्विकत्वं दुरपलपमिति सिद्धम् ।

न न्वेवमपि , भेदस्याऽनिर्वचनीयत्वं समर्थितं भेदधिक्का रादिषु तस्मा द्भेदस्य तात्विकत्व मसिद्ध मितिचे न्न । विज्ञान वादिभिः पराऽपेक्षया निपुणतर मनिर्वचनीयत्वस्य समर्थितत्वेन तस्या र्थाणा मनुपादेयत्वात् ।

एवम् , कल्पितविषयत्वेनवा ? व्यावहारिकविषयत्वेनवा ? अनुवादरूपत्वेनवा ? अनिर्वचनीयत्वसमर्थनेनवा ? भेदश्रुतीना मप्रामा ण्यसमर्थन मेवेति युक्तम् ।

एवं , शतकोटिदारिद्र्यवतोऽनऽन्तकोटय उपाया इति न्यायेन परै रवलम्बिता अनल्पाः कल्पना स्तदीयपक्षस्य प्रामाण्यदुर्भिक्ष मक्षयं विशदयन्तीति दिक् ।

ननु , प्रतीयमानाऽर्थेचाऽभेदश्रुतिविरोधेनाऽप्रामाण्य स्यैष्टत्वा दिति भेदश्रुतीना मप्रामाण्य मद्वैतसिद्धिकारैः कंठरवे णामोदित मितिचे त्सत्यं । यद्यपि , केवलाऽद्वैतपक्षे भेदश्रुतीना नसंगतत्वेन तासा मवशतोऽप्रामाण्य मामोदितमेव ।

तथापि , भेदश्रुतीनां प्रकारगतभेदविषयत्वेन अभेदश्रुतीनां प्रकार्यभेदविषयत्वेनचभेदाऽभेदविषयोभयश्रुतिप्रामाण्याऽभ्युपगमेन विशिष्टा ऽभेदपक्षंरोचयतामस्माकं न कियानपि श्रुत्यक्षराऽप्रामाण्याऽभ्युपगमकलंकः।

अतएव, सू ॥ नेतरोऽनुपपत्तेः । भेदव्यपदेशात् । कर्म कर्तृव्यपदेशाच्च । शब्दविशेषात् । संभोगप्राप्तिरितिचेन्न वैशेष्यात् । उभयेपिहि भेदे नैन मधीयते । विशेषणभेदव्यपदेशाभ्यांच नेतरौ । स्थित्यदनाभ्यांच । सुषुप्त्युत्क्रांत्यो र्भेदेन । अधिकंतु भेदनिर्देशात् । इत्यभ्यासेन भेदस्य तात्त्विकत्व मावेद्य ह्याचार्यः क्वचित् तदनन्यत्व मारंभणशब्दादिभ्यइति प्रकारिगतमेवाऽभेदं कंठरवेण निवेदयंश्च भेदाऽभेदश्रुतीनां विशिष्टाऽभेदपक्षएव तात्पर्य मवार्यं विशदयति ।

ननु, ब्रह्मत्वे नात्मान मनुसंदधतां प्राचा मणिमादिसिद्धेस्सिद्धत्वव्यवहारेण आत्मनएव ब्रह्मत्व मनुमीयत इतिचेन्न । आत्मा तस्याऽष्टमी मूर्ति रिति जीवात्मनः परमेश्वरशरीरत्वस्य प्रमितत्वेन परमेश्वर भावे नात्मान मनुसंदधतां पारमेश्वरोपासनासिद्ध्या तत्फलभूताऽणिमादि सिद्धेः प्राप्तावपि तावता सर्वप्रमाणविरुद्धजीवब्रह्मैक्याऽसिद्धेः ।

नच, केवल मात्मान मनुसंदधतां परमानंदस्याऽनुभव सिद्धत्वेन जीवस्य परमानंदमयब्रह्मत्व मनुभवसिद्धं दुरपलपमिति शंक्यं । भक्ष्येषु माधुर्यस्याऽनुभवसिद्धत्वेपि तस्य भक्ष्यांतरगुडगुणत्व वत् जीवगतानंदस्यापि तदंतरात्मभूतपरमेश्वरधर्मत्वा त्तस्य जीवे दृश्यमानत्वेपि तादृशाऽनुभवस्याऽयथार्थत्वेन तस्य जीवस्य ब्रह्मत्व साधकत्वाऽभावात् ।

ननु, श्रीमदप्पयदीक्षितेन्द्रैः न्यायरक्षामणौ सर्वश्रुति सूत्राणां केवलाऽद्वैतपरत्वस्य समर्थितत्वेन, अद्वैतसिद्धौ तत्कर्तृभि र्षड्विधतात्पर्यलिंगै स्सर्वोपनिषदां केवलाऽद्वैतपरत्वस्य प्रसाधितत्वेन, व्यासतात्पर्यनिर्णये तत्कृता ब्रह्ममीमांसायाः केवलाऽद्वैतपरत्वस्योपपादित

त्वेनच श्रुतीनां विशिष्टाऽभेदपरत्वग्रहणं न युक्त मितिचे न्न। ब्रह्मपथे वेदपथे सकलोपनिषदां केवलभेदकेवलाभेदपरत्वनिराकरणपूर्वकं पड्विधतात्पर्यलिंगै र्विशिष्टशिवाऽभेदपरत्वस्य निर्धारितत्वेन, व्यासपथे ब्रह्ममीमांसाया श्श्रीकण्ठमतमात्रपरत्वस्य सविस्तरं निर्णीतत्वेनच प्रकृते परिष्कृतार्थानां निश्शंकत्वात्।

ननु, यद्येवं जीवेशयो र्भेदएव वास्तव स्तर्हि कतिचि त्पूर्वाचार्याः कुत स्तयो रैक्य मवादिषु रितिचेत्। उच्यते। जीवेशयो र्भेदस्य स्वाभाविकत्वेपि मुक्तिदशायां जीव स्येश्वरेण परमसाम्यस्येप्सिततमत्वेन तादृश्या मुक्तेश्च ईश्वरानन्यभावनासमधिगम्यत्वेन ईश्वरानन्यभावनायाअपि तद्भिन्नभावविश्वासा त्तदभिन्नभावविश्वासस्यैव सुखोपायत्वं मन्वानै रेव तयो रभेदः प्रतिपादितः। तत स्तेषां न किमपि सर्वप्रमाणविरुद्धजीवेश्वराऽभेदप्रतिपादने तात्पर्यं। किंतु ईश्वराऽनन्यत्वभावनासंपादनएवेति शिवम्।

———

# ७. गतिपरिष्कारः

अतएव, सू ॥ अर्चिरादिना तत्प्रथितेरि त्याचार्येण निर्धारिता गति र्विदुष उपपन्ना भवति ।

ननु, श्रु ॥ न तस्य प्राणा उत्क्रामन्तीति विदुषः प्राणो क्रांतिरेव प्रतिषिद्धा । कथमिव तस्य गति रुपपद्येत । तथाहि, इतिनु कामयमान इत्यविद्वद्विषयं परिसमाप्य "अथाऽकामयमानइति विद्वद्विषये विशेषाऽभिधानं प्रतिज्ञाय," न तस्य प्राणा उत्क्रामन्तीति विदुषः प्राणोत्क्रांतिः प्रतिषिध्यते ।

नच, अय मुत्क्रांतिप्रतिषेध श्शरीराऽपादानक इति शंक्यम्। विद्वद्विषयविशेषाऽभिधानप्रतिज्ञानतात्पर्यस्वारस्येन शरीराऽ पादानक इत्येव प्रतीयमानत्वात् । त मुत्क्रामंतं प्राणोऽनूत्क्रामति प्राण मनूत्का मंतं सर्वे प्राणा अनूत्क्रामंतीति जीवाऽनूत्क्रमणोक्त्या जीवस्य यत उत्क्रमण मुक्तम् । ततए वोत्क्रमणं मुख्यप्राण स्येंद्रियाणांच विवक्षितमि त्यवसीयते । जीवस्यतु शरीरादे वोत्क्रमण मुक्तमिति निर्विवादं । अविदुषः प्राणाना मुत्क्रमणस्य शरीराऽपादानकत्वेनैव प्रागुक्ततया विद्वद्विषयप्राणोत्क्रमणस्यापि शरीराऽपादानकत्वस्यैव प्रतिषेधपर मि त्यवगम्यते । एवंच, न तस्य प्राणाइति वाक्यस्य शरीराऽपादानकोत्क्रमण प्रतिषेधपरत्वस्यैव स्वरसतः प्रतीयमानत्वेन तत्त्यागे कारणाऽभावात् ।

ननु, प्राणसंबंधितया श्रुतस्य जीवस्यैव तदुत्क्रमणाऽपादान तयापि ग्रहणे संभवति, मनस्यविपरिवर्तमानस्याऽपादानांऽतरस्य कल्पनं न युक्तमिति; न्यायाऽनुसारेण प्राणोत्क्रांतिप्रतिषेधस्य शरीराऽपादानकत्वं

न सिध्यतीतिचेन्न । पूर्वसंदर्भ मारभ्य शरीरस्य तदुपादानत्वेन विपरिवर्तमानत्वात् श्रु ॥ प्रजापति र्वरुणायाऽश्व मनयत् । स स्वां देवता माछ्र्छत् स पर्यदीर्यत । स एतं वारुणं चतुष्कपाल मपश्यत् । त न्निरवप त्ततोवै स वरुणपाशा दमुच्यत । इत्युपक्रमच्छायया अश्व दातु र्वारुणचतुष्कपालेष्टि विंधास्यत इत्यस्मि न्नर्थे मनसि विपरिवर्त माने " वरुणोवा एतं गृह्णाति । योऽश्वं प्रतिगृह्णीया त्तावतो वारुणान् चतुष्कपाला न्निर्वपेत् . इति , तदनंतराऽवगते विधिवाक्ये साक्षा दधिकारिसमर्पकतया श्रुते । " योश्वं प्रतिगृह्णातीति शब्दे सत्यपि प्रतिगृहीतु रधिकारित्वं नेष्यते । इह जीवस्याऽपादानत्वप्रतिपादक शब्दरहितस्य केवलन्यायमात्रेणाऽपादानत्वकल्पनं नेष्टमिति किमु व क्तव्यं । नाऽपि तदनंतरसंदर्भाऽनुसारेण । तदनंतरं हि , ब्रह्मैव सन् ब्रह्माऽप्येतीति तदेष श्लोको भवति । यदा सर्वे प्रमुच्यंते कामा येऽस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भव त्यत्र ब्रह्म समश्नुत इति ।

तद्यथा , अहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयी तैवमे वेदं शरीरं शेते । अथाऽय मशरीरोऽमृतः प्राणो ब्रह्मैव तेजएव । इत्येतावान् वाक्यसंदर्भ श्श्रूयते । तत्र प्रथमवाक्यं तावत् , नित्यसिद्ध ब्रह्मभावाऽभिव्यक्तिं विदुषः प्रतिपादय त्तस्य स्थानविशेषप्राप्त्यर्थं गत्य पेक्षाऽभावा त्तद्गत्युपयोगिप्राणाना मुत्क्रमणं नाऽपेक्षितमिति शरीराऽपादा नकतदुत्क्रमणप्रतिषेधार्थग्रहणएवाऽनुकूलं । नतु जीवप्राणविश्लेष रूपाऽर्थग्रहणे ।

नच, ब्रह्माऽप्येतीति वचनं ब्रह्मणो विदुषश्च प्राप्यप्राप्तृ भावेन भेदं प्रतिपादयतीति, तस्य तद्ब्रह्मभावाऽभिव्यक्तिपरं न भवति। अतो ब्रह्मैव सन्नित्य त्रैवकार इवार्थइति ज्ञानविकासेन ब्रह्मसदृशो भवन्नेव ब्रह्म प्राप्नोतीति तदर्थो ग्राह्य इति वाच्यं। अप्येतिशब्दोहि न प्राप्त्यर्थः। किंतु लयार्थः। लयश्च तस्य प्राणेंद्रियमनोविशिष्टं स्थूलरूपं विहाय शुद्धेन सूक्ष्मरूपेण तादात्म्याऽभिव्यक्तिरेव। यदिचाऽयं प्राप्त्यर्थ स्स्या त्तदा प्यत्र तादात्म्याऽभिव्यक्तिरेव तदर्थः पर्यवस्यति। बृहदारण्य कएव। 'असतो मा सद्गमय तमसो मा ज्योतिर्गमय इति मंत्रान् पठित्वा, "स यदा हाऽसतो मा सद्गमयेति मृत्युर्वा अस त्स दमृतं मृत्यो र्मामृतं गमयेति प्रापणाऽर्थशब्दाना मैक्यसंपादनार्थत्वेन व्याख्याततया अन्यत्रापि तत्समानार्थवाक्येषु पाप्त्यर्थाना मैक्याऽभि व्यक्तिपरत्वाऽवसायात्।

तथा, श्लोकरूपं द्वितीयवाक्यमपि शरीराऽपादानकोत्क्रमण प्रतिषेधरूपाऽर्थग्रहणएवाऽनुकूल मिति स्पष्टमेव।

नच, तत्र,अत्र ब्रह्म समश्नुतइति वर्तमानसामीप्ये वर्तमान प्रत्ययइति। अत्रेति ब्रह्मप्राप्तिशैघ्र्यप्रतिपत्त्यर्थोऽर्थवादइति योजनीयम्। मुख्याऽर्थग्रहणस्यै वोचितत्वात्। तृतीयवाक्यमपि विदुषा त्यक्तस्य शरीरस्य वल्मीका दनपसृतेन सर्पेण त्यक्त महिकंचुकं वल्मीकगतं दृष्टांतं प्रतिपादय त्तदर्थग्रहणएवाऽनुकूलं। चतुर्थवाक्यमपि त्यक्त शरीरस्य मुक्तस्य विदुषः सर्वप्राणनहेतुपरब्रह्मभावं तदुपपत्त्यर्थं तेजएवेति विशुद्धज्ञानरूपत्वंच प्रतिपादय त्तत्रैवाऽनुकूलं। अतो न वाक्यशेषाऽनु सारेणापि। "न तस्य प्राणा उत्क्रामन्तीत्यस्य स्वारसिकार्थत्यागो युक्तः।

ननु ; माध्यंदिनशाखायाम् , उदाहृतवाक्यस्थाने "न तस्मा त्प्राणा उत्क्रामंतीति पाठो दृश्यते । अत स्तदनुसारेण काण्वशाखाया मपि , तस्येति षष्ठ्या स्संबंधसामान्यवाचिन्या अपादानत्वरूपसंबंध विशेषपर्यवसानं युक्तं ।

एवंच यद्यपि न तस्य प्राणा उत्क्रामन्तीतिप्रथमवाक्ये विदुष श्शरीरपातेऽविद्वदपेक्षया विशेषाऽभिधानं न लभ्यते । तथा प्यग्रे ब्रह्म प्राप्त्युक्त्या विशेषाऽभिधानं लभ्यतइति तन्मात्रविषया विशेषाऽभिधान प्रतिज्ञेति कथंचि द्योजनीय मितिचे न्नैवं । न तस्मा त्प्राणा उत्क्रामंती, त्येतदनंतरं, अत्रैव समवनीयंतइति प्राणानां, अत्र ब्रह्म समश्नुतइति श्लोकार्थाऽनुगुण्येनाऽत्रैव लयश्रवणात् । तदनुसारेण तस्मादिति पदस्य शरीरशरीरणो रभेदोपचारेण शरीरपरतया नेतव्यत्वात् ।

अतएव , आर्तभागप्रश्ने "यत्राऽयं पुरुषो म्रियते उ दस्मा त्प्राणाः क्रामं त्याहो नेति प्रश्ने , उत्तरे नेति होवाच याज्ञवल्क्योऽ त्रैव समवनीयंते । स उच्छ्वय त्याध्माय त्याध्मातो मृत श्शेतइति प्राणोत्क्रांत्यपादान स्याऽऽध्मानेन वायुपूरणेन दृतिव दुच्छ्वयनस्य शरीर-धर्मस्य कीर्तनं दृश्यते ।

न न्वार्तभागप्रश्नोत्तरे न विद्वद्विषयं । उत्तरसंदर्भविरोधात् । उत्तरसंदर्भेहि "यत्राऽस्य पुरुषस्य मृतस्याऽग्निं वा गप्येति वातं प्राण श्चक्षु रादित्यं मन श्चन्द्रं दिश श्श्रोत्रं पृथिवीं शरीर माकाश आत्मा ओषधी र्लोमानि वनस्पती न्केशा अप्सु लोहितञ्च रेतश्च निधीयते , क्वाऽयं तदा पुरुषो भवतीति पुन रार्तभागप्रश्ने याज्ञवल्क्ये नार्तभागेनच रहसि सम्मन्त्रणेन पुण्यपापरूपं कर्म तदाश्रयत्वेन निश्चित मि त्याम्ना

यते । तदनन्तरसन्दर्भे श्रुत्यैव तथा प्रतिपादनात् ।

अत्रहि , श्रूयते " तौ ह्रो त्क्रम्य मन्त्रयांचक्राते तौह यदूचतुः । कर्महैव त दूचतुः । अथ य त्प्रशशंसतुः । कर्महैव प्रशशंसतुः । पुण्योवै पुण्येन कर्मणा भवति पापः पापेनेति ।

नच , अपपुन र्मृत्युं जयति । इति पूर्ववाक्ये संसारतरण रूपफल मुच्यते । तेन प्रकृतविद्वद्विषयत्व मुत्क्रान्तिप्रतिषेधस्याऽव सीयत इति वाच्यं । अग्निर्वै मृत्यु स्सोपा मन्नं । इत्यपा मग्न्यन्न त्वोपासन मुक्त्वाहि , तस्य फलं " अपपुन र्मृत्युं जयती त्युच्यते । तस्मा दग्निजय एवाऽत्राऽपमृत्युजयो न संसारतरणं । अतोऽस्य वाक्य स्यपि अविद्वद्विषयत्वा दविदुषश्च शरीरा त्प्राणाना मुत्क्रान्ते रवश्य म्भावात् । शरीरा चेपा मुत्क्रान्तिप्रतिषेधएव तदर्थो ग्राह्यः । इत श्चैत देवं । यत्राऽय म्पुरुषो म्रियत इति पूर्ववाक्ये पुरुषशब्देन प्रकृतो जीवएव " उ दस्मा त्प्राणाः क्रामन्ती त्यत्र सर्वनाम्ना परामर्शनीयः ।

नच , तत्र पुरुषशब्दस्य शरीरपरत्वं शंकनीयं । यत्राऽस्य पुरुषस्य वा गप्येती त्युत्तरसन्दर्भे " पृथिवीं शरीरमिति प्रकृतपुरुष सम्बन्धित्वेन शरीरस्य पृथक्कीर्तनात् ।

नच , आकाश आत्मा इत्यात्मापि पृथ क्कीर्तितइति वाच्यं । त त्रात्मशब्दस्य आनन्द आत्माइ त्यत्रेव मध्यावयववाचित्वेन हृदया काशपरत्वात् ।

एवञ्च , स उच्छ्व यतीति वाक्यं तच्छब्दः शरीरशरीरिणो रभेदोपचारेण शरीरिपरतया नेतव्य इतिचे न्नैवं । अविद्वद्विषये जीव

प्राणविश्लेपस्याऽप्रसक्तत्वेन तत्प्रतिपेधस्याऽयुक्ततया प्रश्नोत्तरयो र्विद्वद्वि पयत्वस्याऽवश्यवक्तव्यत्वात् ।

ननु , पूर्वोत्तरप्रश्नोत्तराणा मविद्वद्विपयत्वेन , अनयोरपि प्रश्नोत्तरयो रविद्वद्विपयत्वस्याऽवश्यवक्तव्यत्वात् । जीवप्राणविश्लेप प्रसक्ति र्यथाकथंचि त्संपादनीयेतिचे न्न । अविद्वद्विपयप्रश्नोत्तरसन्निधि मात्रेण विद्वद्विपयत्वलिंगबाधाऽयोगात् । आर्तभागप्रश्नपरम्परायां कति ग्रहाः कत्यतिग्रहा इत्याद्यः प्रश्नः । य दिदं सर्वं मृत्यो रन्नं कास्वि त्सा देवता । यस्या मृत्यु रन्न इति द्वितीयः । यत्राऽय म्पुरुपो म्रियते । उ दस्मा त्प्राणाः क्राम न्त्याहोनेति तृतीयः । यत्राय म्पुरुपो म्रियते । कि मेनं न जहातीति चतुर्थः । यत्राऽस्य पुरु पस्य मृतस्याऽग्नि वागप्येति इत्यादिः पञ्चमः । इतिप्रश्नाना मेक विपयत्वाऽभावे नैकरूपप्रायपाठाऽसिद्धेश्च ।

तथापि , तृतीयादिप्रश्नानां म्रियमाणपुरुपवृत्तान्तगोचरत्वे नैकविपयत्वात् । चतुर्थपंचमयोरिव तृतीयस्यापि प्रश्नस्याऽविद्वद्वि पयत्वं वक्तुं युक्तं तत्सन्निधिबला दितिचे दुच्यते । आश्वलप्रभृतिभि र्याज्ञवल्क्येनसह मत्सरतो विजिगीपुकथायां प्रवृत्तै स्त मप्रतिभाया म्पातयितु म्प्रायेण निगूढाः प्रश्नाः कृताः । यथा आर्तभागेनैव तावत् 'कति ग्रहाः क त्यतिग्रहाः-इति यज्ञवृत्तान्तविपयइव प्रश्नः कृतः । अध्यात्मप्रसङ्गान्तर्गतत्वा न्नाऽयं यज्ञवृत्तान्तविपयइति प्रष्टुः कौटिल्य मव गम्य, प्राणवाग्जिह्वाचक्षुश्श्रोत्रमनोहस्तत्वचोग्रहाः । अपाननामरसरूपशब्द कामकर्मस्पर्शा अतिग्रहाः । इत्युत्तर मुक्तं । यथा लाह्यायनिना क पारिक्षिता अभवन् इत्यप्रसिद्धार्थेन पारिक्षितशब्देन प्रश्नः कृतः ।

यत्राऽश्वमेधयाजिनोऽभवन्निति । तदर्थं विवृण्वतैव याज्ञवल्क्ये नोत्तर मुक्तम् । यथा गार्ग्या 'अहंवै त्वा याज्ञवल्क्य यथा काश्योवा वैदेहोवा उग्रपुत्र उद्यतं धनु रधिज्यं कृत्वा द्वौ बाणवन्तौ सपत्नाऽतिव्याधिनौ हस्ते कृ त्वोत्तिष्ठेत् । एव मेवाऽहं त्वा द्वाभ्यां प्रश्नाभ्यां उपोदस्थां । तौ मे ब्रूहीति प्रश्नवाक्यच्छाययैव मत्सरविवरणं कृतं । एव श्चाऽत्र तृतीयप्रश्न स्याऽविद्वद्विषयचतुर्थपञ्चमप्रश्नसन्निधिरपि तयाणा मेकविषय-त्वव्यामोहजननाऽर्थत्वेनाऽन्यथासिद्धोनाऽर्थव्यवस्थापनक्षमः। नतरां ग्रहाऽति ग्रहमृत्युभक्षकदेवतारूपपरस्परभिन्नविषयाद्यद्वितीयप्रश्नप्रतिपक्षितः । नतमां तृतीयप्रश्न गतविद्वद्विषयत्वलिङ्गबाधित इत्येषा दिक् । तस्मा त्सगुणविद्यामालम्ब्यवस्थि तोत्क्रान्तिपूर्विकाऽर्चिरादिगतिः । न विशुद्ध ब्रह्मविद्यासाधारणीति श्रीमदप्पयदीक्षितेन्द्रै श्शिवाद्वैतनिर्णये वेदान्तकल्प तरुपरिमळेच निगदित मिति चेत् ।

अत्र ब्रूमः । निर्गुणविद्यायाएव गगनपद्मिनीसदृक्षत्वेन सगुण निष्ठस्यैव परविद्यानिष्ठत्वा द्गति स्सूपपद्यते ।

तथाच, अथ परा यया त दक्षर मधिगम्यतइ त्युपक्रम्य य स्सर्वज्ञ स्सर्ववि दित्यामननात्, सत्यं ज्ञानमि त्यत्र सर्वकामविशिष्ट ब्रह्माऽनुभवदर्शनाच्च, अस्मा च्छरीरा त्समुत्थाय परंज्योति रुपसम्पद्य, त योर्ध्व माय न्नमृतत्व मेति, तेन प्रद्योते नैष आत्मा निष्क्रामति, चक्षुषोवा मूर्ध्नोवा इत्यादिना सर्वैरपि वेदान्तैः परविद्यानिष्ठस्यैव गत्युत्क्रान्त्यामननाच्च ।

ननु, न तस्य प्राणा उत्क्रामन्तीति विदुष उत्क्रान्तिरेव प्राणानां प्रतिषिद्धा । कथं तस्य गति रुपपद्येतेतिचे न्न। सू ॥ समाना

चासृत्युपक्रमा दमृतत्व ञ्चाऽनुपोष्य। समाना विद्वदविदुपो रुत्क्रान्तिः। किं सर्वत्र साम्यं नेत्याह। आसृत्युपक्रमा दिति। सृत्युपक्रमा द्रत्युपक्रमा त्प्राक् समानैवोत्क्रान्तिः। सृत्युपक्रमस्तु मूर्धन्यनाडीतो विद्वा न्गच्छति। इतर इतराभ्यइति विशेषः। अत्रैव विदुपोऽमृतत्वा त्कथं तस्योत्क्रान्ति रित्याशंक्य तत्राह। अमृतत्वंचाऽनुपोष्य। अनुपोष्य-अदग्ध्वा लिंगशरीरादिकं सप्राणस्व ममृतत्व मुच्यते। अथ मर्त्योऽमृतो भवतीत्यादि नोक्ता ब्रह्मप्राप्तिरपि हार्दब्रह्मप्राप्तिरेव। कस्मा दित्यत आह। सू॥ तदापीते स्संसारव्यपदेशात्। उत्तरत्र, तेन धीरा अपियन्ति ब्रह्मविद स्स्वर्गं लोक मित ऊर्ध्वोमी मुक्ताइति देवयानेन पथा अविकृतब्रह्मप्राप्तिसमयएव लिंगशरीरादिभ्यो मुक्तत्वविधानेन ततः प्राक् संसारित्वाऽवगमात्।

ननु, देहाद्बहि र्गच्छ न्लिंगशरीरं किमिति पार्श्वस्थै र्नोप-लभ्यते। किमितिवा स्थूलदेहस्य दाहच्छेदादिना त न्नोपमृद्येने त्याशंक्य, सूक्ष्मत्वा न्नैव मित्याह। सू॥ सूक्ष्मं प्रमाणतश्च तथोपलब्धेः। नोपमर्देनाऽतइति।

अपिच, जीवदवस्थाया मुपलभ्यमान स्योष्णस्पर्शास्य लिंग शरीराश्रयत्वात्। मृताऽवस्थायां चोष्णस्पर्शाऽनुपलम्भेन तदाश्रय स्योत्क्रान्ति रावश्यकी त्याह। सू॥ अस्यैव चोपपत्ते रूष्माइति। य दुक्तं "न तस्य प्राणा उत्क्रामन्तीति विदुष उत्क्रान्तिः प्रतिषिद्धेति। तत्राह सू॥ प्रतिषेधा दितिचे न्न शारीरात्। नाय मुत्क्रान्तिप्रतिषेधः प्राणानां शरीरात्, किन्तु शारीरादेव। कथ मिद मवगम्यते। सू॥ स्पष्टो ह्येकेषाम्। माध्यंदिनानां शाखायां। न तस्मा त्प्राणा

उत्क्रामन्तीति पञ्चमीप्रयोगात् । तस्मा दिति प्राधान्या न्निश्रेय साऽधिकृतो देही गृह्यते न देहः । न तस्मा दुच्चिक्रमिषोः जीवा त्प्राणा अपक्रामन्ति सह तेनैव भवन्ती त्यर्थः ।

तथाच, सप्राणस्य देहा दुत्क्रान्ति र्भवत्येव । एवञ्च । तस्येति सम्बन्धसामान्ये षष्ठी शाखान्तरगतया पञ्चम्या सम्बन्धविशेषेऽवस्थाप्यते ।

नचैव मितिनु कामयमानइति उत्क्रान्ते र्विद्वत्सम्बन्धितोक्ति रनुपपन्नेति वाच्यम् ! नहीद मुत्क्रान्ते रविद्वत्सम्बन्धिताऽभिधानम् । न ह्यविदुषो मूर्ध्न उत्क्रान्ति स्सम्भवति । श्रु ॥ त योर्ध्व माय न्नमृतत्व मेतीति सू ॥ तदोकोग्रज्वलनमित्यादिश्रुतिसूत्राभ्यां विदुषएव मूर्ध्न उत्क्रां त्यभिधानात् ।

तथा, तं विद्याकर्मणी समन्वारभेते इति समन्वारम्भणमपि नाऽविदुष स्सम्भवति । सू ॥ समन्वारम्भणात् । विभाग श्शतवदिति सूत्राभ्यां समन्वारम्भणस्य विद्वद्विषत्वाऽभिधानाच्च ।

तथा, प्राजापत्यं ब्रह्मवेति ब्रह्मरूपापत्तिरपि नाऽविदुष स्सम्भवति । सू ॥ ब्राह्मेण जैमिनि रुपन्यासादिभ्यइति तस्या विद्या फलत्वाऽभिधानात् ।

किन्तु, तस्मा ल्लोका त्पुन रे त्यस्मै लोकायाऽकर्मणइति यत्प्रत्या गमन मुक्तं तस्याऽविद्वत्सम्बन्धिताऽभिधान मेतत् । तथाचाऽविद्वान् कर्मक्षया त्पुन रागच्छति । विद्वांस्तु ब्रह्माऽप्येतीत्येव विशेषाऽभिधाना न्नाऽनुत्क्रान्त्युत्क्रान्तिभ्यां विशेषो विवक्षितः ।

नच, शारीरा दुत्क्रान्ते रप्रसक्ते स्तन्निषेधाऽनुपपत्तिः। देवदत्तो मृत इत्यादिलौकिकव्यवहारा त्तत्प्रसक्तौ निषेधसम्भवात्। जीवाऽपेतं वाव किलेदं म्रियते न जीवो म्रियतेइतिवा।

अपिच, नैवो त्क्रान्त्यभावोऽपूर्वोऽत्र प्रतिपाद्यते। किन्तु, विभागप्रश्नोत्तरसिद्धोऽनूद्यते।

तथाहि, यत्राऽयं पुरुषो म्रियते उ दस्मा त्प्राणाः क्राम न्त्याहो नेति प्रश्ने, नेति होवाच याज्ञवल्क्योऽत्रैव समवनीयन्ते। स उच्छ्वय त्याध्माय त्याध्मातो मृत श्शेतेइत्युत्तरम्। तत्राऽस्मा दितीदं शब्देन देही परामृश्यते। अत्रैव समवनीयन्तइति जीवे प्राणानां संलीनताया उक्ताया स्सम्भवात्।

नच, स उच्छ्वयतीति जीवस्य उच्छूनता अनुपपन्नेति वाच्यम्। न ह्युच्छ्वयतीत्यत्र उच्छूनताऽर्थः : कि न्तूर्ध्वगमनमेव। टुओश्वि गतिवृद्ध्यो रिति स्मरणात्। आध्मायति - देहं शब्दयुक्तं करोती त्यर्थः। ध्माधातो स्सकर्मकत्वात्। शंखान् दध्मु रिति दर्शनात्। आध्मातः कर्मभूतो देहः। आध्मात श्शंखइति दर्शनात्। मृतः प्राणवियुक्त श्शेत इत्यर्थः। तथाऽचाऽत्र सिद्धो जीवा त्प्राणाना मुत्क्रमणाऽभावोऽनूद्यते। न तस्य प्राणाइति। नचाऽनुवादो व्यर्थ इति शंक्यम्। ब्रह्मैव सन्नित्युक्तब्रह्मत्वोपपादकत्वात्।

अतश्च, ब्रह्मैव सन्निति ब्रह्मभावोपि वैशेषिको नोच्यते। विद्यासाध्यब्रह्मप्राप्तेः ब्रह्माऽप्येतीति पृथगेवाऽभिधानात्।

किन्तु, उत्क्रान्तिप्रस्तावे येय मिन्द्रियमनःप्राणसहितस्य जीवस्य भूतद्वारा ब्रह्मणि सम्पत्ति रविभागापत्तिरूपा विद्वदविदुषो

स्समाना सू ॥ वाङ्मनसि दर्शना च्छब्दाच्चेत्यारभ्य । अविभागे वचना दित्येव मन्तेन निरूप्यते । सैवाऽभिधीयते । तदभिधानंच तस्य ब्रह्म प्राप्तिद्वारत्वात् । नह्युत्क्रान्त्यभावे देवयानेन पथा ब्रह्मगमनं सम्भवति, तदर्थमेवहि द्वितीयपादेन उत्क्रान्तिनिरूपणं ।

नच प्राणसहितस्य जीवस्य ब्रह्मणि सम्पत्तिः । जीवात् प्राणाना मुत्क्रान्तिप्रतिषेधं विना सम्भवतीति तत्प्रतिषेधोऽप्यर्थवान् । यदाऽपि ब्रह्मैव सन्नित्यस्य स्वयमपि ब्रह्म भूत्वे त्यर्थः । देवो भूत्वा देवा नप्येतीतिव त्तदाऽपि ब्रह्मभावो प्युत्क्रान्तप्राणस्य मृतस्य न भवतीति प्रति षेधो प्यर्थवान् । इयंच सम्पत्तिः कदा केन क्रमेण भवती त्याकांक्षाया माह । तदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः । अथ मर्त्योऽ मृतो भव त्यत्र ब्रह्म समश्नुतइति । सर्वे कामाः प्रमुच्यन्तइति सेन्द्रि यस्य प्राणे संपत्त्यंति शेषः । कारणस्य प्रतिलयेहि कार्यस्य सर्वा त्मना प्रतिलयो भवति । अथ मर्त्यो ऽ मृतो भवतीति, अनं तरं जीवे प्राणस्य संपत्ति रुक्ता तदिद मुक्तं सूत्राऽवयवेन "अमृतत्वंचाऽनुपोष्येति । अस्याऽर्थः । अथ मर्त्यइत्यत्राऽमृतशब्देन विद्याफलं नोच्यते । उत्तरत्र तस्याऽभिधानात् । किं त्वनुपोष्य— अदग्ध्वा बंधहेतु मनुपेत्यचाऽविकृतं ब्रह्म सप्राणत्वमात्रं,त तु विद्वदविषो स्समानमिति इदमेवचाऽमृतत्व मस्य सूत्रस्य विषयः । तयोर्ध्व माय- न्नमृतत्व मेतीत्यादा वमृतत्वस्य उत्क्रान्तिपूर्वकत्वाऽभिधानेन तदभावे शंकाऽनुदयात् । अत्र ब्रह्म समश्नुतइति जीवस्य ब्रह्मणि संपत्तिः । श्रु ॥ वाङ्मनसि सम्पद्यते मनः प्राणे प्राण स्तेजसि तेजः परस्यां देवतायामिति श्रुत्यन्तरात् ।

नन्वेवं, ब्रह्मणि संपन्नः सन्निति वक्तव्यं नतु ब्रह्मैव सन्नित्या शंक्य सम्पत्तिरिह नीरक्षीरव दग्नितप्ता ऽयःपिण्डव दविभागापत्तिरेव। नतु संश्लेषमात्रमिति परिहरिष्यन् प्रथमं जीवस्य मृतत्वव्यवहारो निरालंबनः स्या दिति शंकां परिहरति। तद्यथा, अहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयी तैवमे वेदं शरीरं शेते। अथाऽय मशरीरोऽमृतो प्राणो ब्रह्मैव तेजएवेति।

यथा, अहिनिर्ल्वयनी अहित्वक् अहिना निर्मुक्ता प्राणवि युक्तत्वा न्मृता वल्मीके शयीत। एवमे वेदं शरीरं प्राणवियोगा न्मृतं शेते। जीवस्तु शरीरा दुत्क्रान्तत्वात् देहस्वाम्यनिवृत्ते र्वा अशरीरः प्राणवियोगाऽभावाच्च अमृतः प्राणाऽविभागापत्त्या प्राणः ब्रह्माऽविभागा भावात्ब्रह्मैव तेजोऽविभापत्त्या तेजएवेति तदेवं ब्रह्मैव स न्नित्येत त्प्रपंचितं।

इदानीं कीदृशेन पथा कीदृक्साधनविशिष्टश्च ब्रह्माऽप्येती त्येत त्प्रपंचयति। अणुः पन्था विततः पुराणो मांस्पृष्टोऽनुवित्तो मयैव। तेन धीरा अपियन्ति ब्रह्मविदः स्वर्गं लोक मित ऊर्ध्वोमी मुक्ताः। तस्मि ञ्छुक्ल मुत नील माहुः पिंगलं हरितं लोहितंच। एष पन्था ब्रह्मणाऽनुवित्त स्तेनैति ब्रह्मवित् पुण्यकृ त्तैजसश्च इति। मूर्धन्य नाड्या स्तदवित्तत्वात्। दुर्विज्ञेयत्वाद्वा, अणुः पन्थाः देवयानः। मांस्पृष्टइति याज्ञवल्क्योक्तिः। मूर्धन्यनाडीसम्बन्धाच्च देवयानस्य मांस्पृष्टइत्युक्तिः। अनुवित्तः परिज्ञातः ध्यानेन मया। स्वर्गं लोक मिति निरतिशयानन्दं ब्रह्मोच्यते। ब्रह्माऽप्येतीति प्रक्रमात्। विमुक्ता इति स्थूला त्सूक्ष्माच्च शरीरात् देहबंधहेतुपुण्यपापाभ्यांच। तस्मि

च्छुक्रमिति मूर्धन्यनाड्या आदित्यरश्मीनांच नानारूपत्वस्य श्रुति सिद्धत्वात् तद्घटितमार्गस्य नानारूपत्वं । तैजसश्चेति विद्यादिसाधन समुच्चयार्थश्चकारः । अतए वैकैकसाधनाऽनुष्ठानेऽपुरुषार्थसिद्धि माह अन्धं तमः प्रविशन्ति येऽविद्या मुपासते । ततो भूयइव ते तमो य उ विद्यायां रताः । इत्यादिना तदेवं पौर्वापर्येण प्रकरणे पर्यालोच्य माने विदुषो गत्युत्क्रान्त्यो रवगमात् प्रतिषेधः शारीराऽपादानकएव । स्मर्यतेच - महाभारते विदुषो गतिः " शुकःकिल वैयासकि रादित्य मण्डल मभिप्रतस्थइति ।

तथा , शुकस्तु मारुता चीव्रां गतिं कृत्वाऽन्तरिक्षगः । दर्शयित्वा प्रभावं स्वं सर्वभूतगतोऽभवत् । सर्वभूतात्मभूतस्य सम्य ग्भूतानि पश्यतः । देवापि मार्गे मुह्यन्ति अपदस्य पदैषिणः । अपदस्य स्वस्थाना द्धृदया दुत्क्रान्तत्वात् ।. पदैषिणः - परमपद प्रेप्सो र्मार्गे देवयाने देवाअपि मुह्यन्तीति मार्गस्य दुर्विज्ञेय तोच्यते । नतु मार्गाऽभावः । श्रु।। अथ य एतौ पन्थानौ न विदुः । ते कीटाः पतंगा यदि दंदशूक मिति मार्गद्वयभ्रष्टाना मधोगतिश्रवणात् ।

अत्र यदुक्तं "न तस्मादिति शारीरा त्प्राणाना मुत्क्रान्ति प्रसंगाऽभावा त्तन्निषेधो नोपपद्यतइति । त दयुक्तम् । तस्य तावदेव चिरमिति विदुष श्शरीरवियोगकाले ब्रह्मसम्पत्तिवचनेन तस्मि न्काले शारीरा द्विदुषः प्राणानामपि वियोगस्य प्रसक्तत्वात् निषेधस्यार्थप्राप्त विषयत्वाच्च ।

तथाच , सर्वशाखाप्रत्ययन्यायेन सर्वासु विद्यासु देहपात समये सुकृतदुष्कृतप्रहाण मुक्तं भवति । अतो भोक्तव्याऽभावेन लोकान्तर

गमनाऽभावात् । विदुषो लोकाऽन्तरगत्यौपयिकप्राणादिविश्लेष श्शारी- रस्याऽर्थवशा त्प्राप्तः । अत श्शारीरा दुत्क्रान्ति रर्थप्राप्ता प्रतिषेध्याऽऽसी दर्चिरादिगत्युपपत्त्यर्थम् ।

ननु ! आर्तभागप्रश्नैकार्थ्याय शारीरा दुत्क्रान्तिप्रतिषेधो नोपपद्यतइति चे न्न । आर्तभागप्रश्नस्य विद्वद्विषयत्वाऽभावेन तदै कार्थ्यस्याऽनपेक्षितत्वात् ।

तत्रच, "अस्मा त्प्राणाः क्राम न्त्युत नेति प्रश्नस्य शरीरा दुत्क्रान्तिविषयत्वाऽभावाच्च ।

तथाच, शरीरे प्राणस्थित्यभावेन तत उत्क्रान्ते रसंदिग्धतया तत्र शंकाऽनुदयेन प्रश्नस्य शारीरा दुत्क्रान्तिविषयत्वाऽवगमेन तत्प्रति वचनस्यापि शारीरा दनुत्क्रान्तिविषयत्वाऽवधारणात् । अत्रैव जीवे समवनीयन्ते । संसृज्यन्ते इति तदर्थाऽवगमाच्च । एव मार्तभागप्रश्नस्य विद्वद्विषयत्वेपि प्रश्नोत्तरयोः शारीराऽपादानकत्वाऽवधारणेन प्रकृतप्रश्नस्य विद्वद्विषयत्वप्रसाधनाय कृतो ग्रन्थविस्तरो विषमालंकारविषयइति विदितः।

तथा, सउच्छ्वयतीत्यादिवाक्येन शरीरधर्मस्य कीर्तितत्वेन प्रश्नोत्तरयो श्शरीराऽपादानकत्व मवगम्यत इत्यपि परेषा माशा मृग- तृष्णाय ते । उच्छ्वयते रूर्ध्वगमनाऽर्थकतया शारीरधर्मकीर्तनपरत्व दर्शनेन उच्छूनतारूपाऽर्थालाभेन शरीरधर्मकीर्तनाऽनवगमात् ।

अतएव, तयोर्ध्वमायन् 'अस्मा च्छरीरा त्समुत्थाय परञ्ज्योति रूपसम्पद्य इत्येवं जातीयका श्श्रुतयः विदुष उत्क्रान्ति पूर्विकामेव ब्रह्मप्राप्ति मुपदिशन्ति ।

नच, शरीरा त्समुत्थानं शरीराभिमाना त्समुत्थानमिति विवरणेन न तया श्रुत्या शरीरा दुत्क्रान्ति र्विवक्षितेति शंक्यम्। शरीरपदस्य तदभिमानपरत्वे लाक्षणिकत्वेन दुष्टत्वात्। तस्मा त्प्राणोत्क्रान्ति प्रतिषेध श्शारीराऽपादानकएव।

अतएव, सू॥ प्रतिषेधा दितिचेन्न शारीरा दित्याचार्यै र्णोत्क्रान्तिप्रतिषेधस्य शरीरापादनकत्वनिराकरणपूर्वकं कृतं शारीरापादान कत्वनिर्धारण मुपपद्यते।

ननु, परैः 'प्रतिषेधादितिसूत्रं पूर्वपक्षतया व्याख्याय' सू॥ स्पष्टो ह्येकेषामिति सूत्रं शरीराऽपादानकप्राणोत्क्रान्तिप्रतिषेधरूप सिद्धान्तपरतया समर्थित मितिचे न्न। तदोकोग्रज्वलनमित्युत्तरसूत्रे शताऽधिक येति गतिप्रतिपादनेन तद्विरोधात्।

नच, समाप्ता प्रासंगिकी परविद्यागता चिन्ता। सम्प्रति त्वपरविद्याविषया मेवाऽनुवर्तयतीति त दोकोग्रज्वलनमिति सूत्रस्याऽ परब्रह्मविषयतयाऽवतारितत्वेन 'स्पष्टोह्येकेषामिति सूत्रे ब्रह्मविदा मुत्क्रान्तिप्रतिषेधपरं विवरणं न विरुध्यतइति शंक्यम्, अथाऽपरासु विद्यासु फलप्राप्तये देवयानं पन्थान मवतारयिष्यन् प्रथमन्ताव द्यथा शास्त्र मुत्क्रन्तिक्रम मन्वाचष्टे। समानाहि विद्वदविदुषो रुत्क्रान्ति रिति वक्ष्यतीत्यादिना परैरपि प्रकृतप्रकरणस्य सगुणविषत्वेनैवाऽवता रितत्वेन मध्ये निर्गुणविषयतया कृतविवरणस्य प्रकरणविरुद्धत्वान पायात्। निर्गुणविद्याप्रसंगस्य दुर्निरूपत्वाच्च।

तथाच, प्रतिपिपादयिषित स्योत्क्रान्त्यभावस्य शास्त्रे शशशृंगाय माणत्वेन विशिष्य प्रतिकूलार्थपरे सू॥ प्रतिषेधा दितिचेन्न शारीरादिति

सूत्रे प्रतिपादयितु मशक्यत्वेनच पूर्वोक्तशारीराऽपादानकोत्क्रान्तिप्रतिषेध रूपाऽर्थविस्पष्टीकरणार्थमेव सामान्यतोनिबद्धे सू ॥ स्पष्टो ह्येकेषा मिति सूत्रे उत्क्रान्तिप्रतिषेधं शरीरापादानकं प्रदिदर्शयिषुभिः परैरेव बला न्निर्गुणविद्याप्रसक्ति रवतारितेति विज्ञायते ।

नखलु विदुष उत्क्रान्तिप्रतिषेधे तात्पर्यं मणीयो ष्याचार्यस्य।

तथाहि, यदि विदुष उत्क्रान्तिप्रतिषेधएव सूत्रकर्तु रिष्येत।

तर्हि, तेनविद्वदविदुषो रुत्क्रान्तिसाम्यं न प्रतिज्ञायेत ।

किञ्च, यदि श्रु ॥ न तस्य प्राणा उत्क्रामन्तीतिवाक्यं विदुष उत्क्रान्तिप्रतिषेधे प्रमाणीक्रियेत।

तर्हि, उत्क्रान्तिसद्भाव माशंक्य तन्निराक्रियेत। नहि तथा क्रियते।

किन्तु, प्रतिषेधादितिचेन्नेत्युत्क्रान्तिप्रतिषेध माशंक्य स प्रतिषेध श्शारीरादिति शारीरापादानकइति निर्धार्यते ।

अपिच, यदि श्रुत्युक्त उत्क्रान्तिप्रतिषेध श्शरीराऽपादानकएव स्यात्। तर्हि प्रतिषेधादितिचेन्न शरीरादित्येव सूत्रयेत्। लाघवात्। नहि प्रथम मुत्क्रान्तिप्रतिषेधं शारीरापादानकं निबध्य तत स्त न्निषिध्य तस्य शरीरापादानकत्वनिर्णये प्रयोजनं दृश्यते ।

इदंच, यदि प्रतिषेधादितिचेन्न शारीरादिति सूत्रं पूर्वपक्षतयै वोक्त्वा तत स्तद्व्यतिरेकेण सिद्धान्तं व्यवक्ष्य तर्हि, "स्पष्टो ह्येकेषामिति पूर्वोक्तमेव स्पष्टीकुर्वन्निव न सामान्यवचनेनाऽसूत्रयिष्यत्।

किन्तु, इतिचेन्न शरीरादिति पूर्वोक्तं प्रतिषिध्य विशेष वचनेनैव सूत्रयेत्। एतच्च। न तस्मा दुच्चिक्रमिषो जींवा त्प्राणा अपक्रामन्ति सह तेनैव भवन्तीत्यर्थः। एवं प्राप्ते प्रत्युच्यते। नैत

दस्तीतिपरोक्तं शारीराऽपादानकोत्क्रान्तिप्रतिषेधनिराकरणं यदि शास्त्रकर्तु रिष्येत । तर्हि , प्रतिषेधादितिचेन्न , नाऽणु रतच्छुते रितिचेन्न । इत्यादाविव " शारीरादितिचेन्न शरीरादिति विस्पष्टार्थमेव सूत्रयेत् । अन्यच , यदि शास्त्रकृत् पूर्वपक्षं शारीराऽपादानकोत्क्रान्तिप्रतिषेधं प्रतिषेधादिति चेन्न शारीरादिति विशिष्य संसूत्र्य, परमसिद्धान्तं शरीराऽपादानकोत्क्रान्तिप्रतिषेधं उक्तार्थस्पष्टीकरणरूपेण स्पष्टोह्येकेषामिति सूत्रेण व्यवक्ष्यत् , तर्हि - स्फुटं प्रतारकोऽभविष्यत् । नहि विशेष वचनेनाऽसंशयं पूर्वपक्षं निबध्य सम्भवदर्थान्तरेण सामान्यवचनेन सिद्धान्ते व्यामोहं जनयन् जनान्वंचयितुं प्रावर्तय तेदं शास्त्र माचार्यः ।

एवंच , प्रथमं विद्वदविदुषो रुत्क्रान्तिसामान्यं प्रतिज्ञाय श्रुत्युक्त मुत्क्रान्तिप्रतिषेधं शारीराऽपादानकं निबध्य सू ॥ स्पष्टोह्येकेषामित्युक्त एवाऽर्थ एकेषां शाखिनां पंचमीपाठात् स्पष्टइति वदत आचार्यस्य मते विदुष उत्क्रान्ति र्नास्तीति , तस्योत्क्रन्तिप्रतिषेध श्शरीरापादानक इतिच वक्तु मयुक्त मिति दिक् ।

अतएव , वाङ्मनसि दर्शनाच्छब्दाच्चेत्यादिना इन्द्रियप्राण सहितस्य जीवस्य लिंगशरीरेण सहोत्क्रान्ति र्निरूपिता ।

तथा , समाहित मुत्सर्ज न्याया देवमेवाऽयं शारीर आत्मा प्राज्ञेनाऽन्वारूढ उत्सर्ज न्यातीत्यादिका श्रुति रपि । सप्रपञ्च मुत्क्रान्ति वदति ।

ततएवच , सू ॥ अर्चिरादिना तत्प्रथिते रित्यर्चिरादिमार्गेणैव ब्रह्मप्राप्ति र्न प्रकारान्तरेणेति निर्धारितं ।

नच, त मेवं विदित्वाऽतिमृत्यु मेति नाऽन्यः पन्था विद्यतेऽयना येति ज्ञानव्यतिरिक्तमार्गान्तरनिषेधा न्न देवयानः पन्था अपेक्षितव्यइति वाच्यम् । तस्य वचनस्य केवलकर्मादिसाधनाऽन्तरमात्रप्रतिषेधकतया देवयानमार्गनिषेधकत्वाऽभावात् । सू ॥ विद्याकर्मणो रितितु प्रकृतत्वा दितिसूत्रे "अ थैतयोः पथो र्न कतरेणच न इत्युपात्तयो र्देवयानपितृ यानयोः पथो र्विद्याकर्मणी प्रतिपेदे इति विद्याया अपि देवयानमार्ग प्रवर्तकत्वेनाऽभिधाना द्विद्याग्रहणेनैव तदादे र्देवयानस्यापि लाभात् । तं मुक्त्वा ब्रह्मगमनायाऽन्यो मार्गो नाऽस्तीति त द्ब्रह्मगमनाय देवयान स्यैवाऽपेक्षा प्रतीयते ।

अन्यथा, मार्गाऽनपेक्षाया मयनाये त्युक्तगमनाऽनुपपत्तेः ।

नाऽपि, अयनायेति गमनं नाऽभिधीयते । किन्तु ब्रह्मप्राप्तिरेवेति शंक्यम् । इण्गतौ । अयपयगताविति स्मरणा त्तदतिक्रये कारणाऽ भावात् ।

ननु, अव्यापकस्यैवाऽव्यापकंप्रत्येव गमनं ब्रह्मच व्यापकं तत्प्रति गमनाऽसम्भवेन गमनपद मुपाधिकृतभेदराहित्यपरमि त्यद्वैतसिद्धि कारैः परब्रह्मप्रति गत्यनुपपत्ते रुपपादितत्वेन गतिश्रुति रपरब्रह्मविषयेतिचे न्न । मुख्ये सम्भवति गौणाऽर्थग्रहणस्याऽयुक्तत्वात् । ब्रह्मणो व्याप कस्यापि साधकाऽनुग्रहार्थं महाकैलासादिदिव्यस्थानेषु स्वेच्छापरिगृहीत परिच्छिन्नमंगळविग्रहसम्भवेन तत्प्रति जीवस्याऽणो र्गमनस्य सूप पन्नत्वात् ।

अन्यथा, श्रु ॥ स एना न्ब्रह्म गमयति। परंज्योति रुप सम्पद्य ॥ सू ॥ अप्रतीकालम्बना न्नयतीति बादरायण इत्यादिश्रुति सूत्राणा मनेकेषा मानर्थक्यापत्ते रवार्यत्वात्।

नच, सू ॥ कार्यं बादरि रस्य गत्युपपत्तेरि त्यधिकरणे। परब्रह्मविषये गते रनुपपन्नतया तस्या स्सगुणब्रह्मविषयत्वस्य समर्थितत्वेन गतिप्रतिपादकश्रुतिसूत्राणां चरितार्थत्वेन नाऽनर्थक्यमिति शंक्यम्। तत्र परैः, सू॥ कार्यं बादरिरित्यादिपूर्वपक्षसूत्राणामेव सिद्धान्तीकृत्य "कं पुनः पूर्वपक्ष माशंक्याऽयं सिद्धान्तः प्रतिष्ठापितः कार्यं बादरि रित्यदिनेति "सइदानीं सूत्रै रेवोपवर्ण्यते सू॥ परं जैमिनि र्मुख्यत्वादिति उत्तरपक्षसूत्राणां पूर्वपक्षीकृतत्वेनच सूत्रकृन्मतगतपूर्वोत्तरपक्षयोः परैः व्यत्यासितत्वाऽव गमेन तेन समर्थनेन परमतस्य सूत्रकृन्मतविपरीतत्वमात्रसंसिद्धया गतेः कार्यब्रह्मविषयत्वाऽसिद्धेः।

अन्यथा, सिद्धान्त स्योत्तरपक्षत्वव्यवहारो निरालम्बनः स्यात्। यद्येव माचार्यः सिद्धान्तं पूर्वत्र पूर्वपक्ष मुत्तरत्र च निबध्नन् पूर्वोत्तरपक्षयो र्व्यामोह मापादयिष्य त्तर्हि ध्रुवं प्रतारकोऽभविष्यत्। न खल्वाचार्येण प्रतारकेण भाव्यम्। तस्मा दाचार्यस्य मत उत्तर पक्षएव सिद्धान्त इति युक्तम्।

ननु, परब्रह्मविषया गतिश्रुतयइति पक्षान्तरं। ता वेतौ द्वौ पक्षा वाचार्येण सूत्रितौ। गत्युपपत्यादिभि रेकः। मुख्यत्वादिभि र परः। तत्र गत्युपपत्यादयः प्रभवन्ति मुख्यत्वादी नाभासयितुं।

ननु मुख्यत्वादयो गत्युपपत्त्यादी नित्याद्यएव सिद्धान्तः। द्वितीयः पूर्वपक्षः। न ह्यसत्यपि सम्भवे मुख्यस्यैवाऽर्थस्य ग्रहणमिति कश्चि दाज्ञापयिता विद्यते। तस्मा दाद्यएव सिद्धान्त इतिचे न्न। आद्यपक्षे गत्युपपत्यादिसंभवस्यवा द्वितीयपक्षे तदसम्भवस्यवा बादरिमतत्वोक्त्या तत्राचार्यसम्मत्यनवगमात्। सगुणस्यैव मुख्यतया तत्र गत्युपपत्ते रुभयवादिसम्मतत्वेन प्रकृते सत्यसम्भवे मुख्यस्याऽग्रहणमिति न्यायाऽ प्रवृत्तेश्च।

किञ्च, परविद्याप्रकरणेपि गते राम्नानेन तदन्यथाऽनुपपत्त्या सगुणस्यैव मुख्यत्वाऽवगमाच्च।

नच, परविद्याप्रकरणे गतिकीर्तनं तत्स्तुत्यर्थमिति शंक्यम्। गते स्सगुणविद्याफलतया सम्मतत्वेनाऽन्यफलेनाऽन्यस्तुत्यनुपपत्तेः।

इदंच, अबद्धं पठित्वा कुचोदनवत् स्वस्यापि शास्त्राऽ विषयत्वेन सम्मतं निर्गुणं वस्तु किमप्यभिप्रेत्य तत्र गते रनुपपन्नतया श्रु॥ सएनान् ब्रह्म गमयति, सू॥ अप्रतीकालम्बना न्नयतीति बादरायणइत्याद्यनन्तश्रुतिसूत्रप्रतिपादिताया गतेः कार्यब्रह्मविषयत्वकल्प नाऽपेक्षया गतिप्रतिपादकश्रुतिसूत्राऽनुगुण्याय सगुणस्य मुख्यत्वाऽभ्युपगम स्यैव युक्ततरत्वाच्च।

एतच्च, शुक्लकृष्णे गतीह्येते जगत श्शाश्वती मते। इत्यादिस्मृतिभिरपि देवयानपितृयानरूपमार्गद्वयस्यैव निरूपितत्वेन ब्रह्म विदो गत्यभावस्याऽनभिधानाच्च गतेः कार्यब्रह्ममात्रविषयत्व मयुक्तम्।

इदंच , सू ॥ आप्रायणादिति सूत्रेण , प्रयाणकाले मनसाऽच लेनेत्यादि स्मृत्याच विदुषः प्राणप्रयाण नैयत्यस्मरणे नोत्क्रान्त्यभाव वचनं सर्वप्रमाणविप्रतिपिद्धमिति सिद्धम् ।

अतएव , एप ब्रह्मपथो देवपथइति देवयान म्पन्थान मुप दिश्य, अथ यएतौ पन्थानौ नविदु स्ते कीटाः पतंगावेति । अ थैयोः पथो र्न कतरेणच तानीमानि क्षुद्रा ण्यसकृदावर्तीनि भूतानि भव न्तीति । जायस्व म्रियस्वेत्येव तृतीयं स्थानं । •तेनाऽसौ लोको न सं पूर्यते । तस्मा ज्जुगुप्सेत । इति मार्गद्वयभ्रष्टानां कष्टजुगुप्सिततृतीय मार्गश्रवणाच्च ब्रह्मविदां देवयानाऽभाववचनं सर्वश्रुतिस्मृतिसूत्रविरुद्ध मिति दिक् ।

---

## ८. मुक्तिपरिष्कारः

अत्र वदन्ति केचित्, श्रु॥ त मेवं विदित्वाऽतिमृत्यु मेति। नाऽन्यःपन्था अयनाय विद्यते, ज्ञानादेवच कैवल्य मित्यादिश्रुतिस्मृति प्रामाण्येन ज्ञानस्यैव मुक्तिसाधनत्वाऽवगमा ज्ञानस्याऽज्ञानैकनिवर्तकत्वस्व भावतया, बन्धस्याऽज्ञानरूपत्वाऽवगमेन जीवस्य, नाऽहं म्ब्रह्मेतिरूपाऽ ज्ञाननिवर्तकेनाऽहम्ब्रह्माऽस्मी त्यपरोक्षाऽनुभवेन स्वाऽभिन्नब्रह्मरूपमुक्ति सिद्ध्यवगमा ज्जीवब्रह्मैक्यरूपैव परममुक्ति रिति। तदसत्। श्रु॥ ब्रह्मवि दाप्नोतिपर मिति। परमेश्वरोपासकस्य परमेश्वरंप्राप्ति म्प्रतिज्ञाय। सोऽश्नुते। सर्वा न्कामा न्सहब्रह्मणेति, परममुक्तेः परमेश्वर सायुज्यरूपत्वाऽऽज्ञानेन तद्विरोधात्।

नच, ज्ञानस्यैव मुक्तिसाधनत्वाऽऽम्नानेन तस्याऽज्ञानैक निवर्तकतया बन्धस्याऽज्ञानरूपत्वसम्प्रतिपत्त्या ज्ञानेन सायुज्यसिद्धे र्दुर्निरूपत्वा न्मुक्ति र्ब्रह्मैक्यरूपैवेति शंक्यम्। वेदान्तेषु मुक्तिसाधनतया विहितस्य ज्ञानस्य साधनपरिष्कार उपासनारूपत्वनिर्णयेन तस्य सायुज्यसाधकत्वाऽविरोधात्। श्रु॥ ध्याननिर्मथनाऽभ्यासा त्पाश न्दहति पण्डितः। ज्ञात्वा देवं सर्वपाशाऽपहानिरित्यादिश्रुतिप्रामाण्येन बन्धस्य पाशरूपत्वाऽवगमेनाऽज्ञानरूपत्वाऽभावाच्च।

ननु, मुक्ते स्सायुज्यरूपत्वेपि सायुज्य स्यैक्यरूपत्वमेवेति चेन्न। श्रु॥ सयुजा सखायाविति श्रुत्या सायुज्यस्य सयुजो र्धर्मतया सहयोगरूपत्वेन श्रुतत्वात्। सहयोगस्यच भेदैकसम्भाव्यतया तस्यैक्य रूपत्वाऽयोगात्।

नच, मुक्ते स्सायुज्यरूपत्वे श्रु ॥ अह म्ब्रह्माऽस्मीतिसूक्ति विरुध्येतेतिशंक्यम्। तस्या अहङ्ब्रह्मोपासनाविषयत्वेन पारमार्थिकाऽभेदबोधकत्वाऽभावात्।

ननु, ब्रह्मवि द्ब्रह्मैव भवतीत्यादिश्रुतिप्रामाण्येन मुक्तेः ब्रह्मैक्यरूपत्व मवगम्यत इतिचे न्नैवम्। श्रु ॥ वैष्णवं वामन मालभेत स विष्णुरेव भू त्वेमा ल्लोका नभिजयतीत्यादा वेवकार स्येवाऽर्थकत्व संप्रतिपत्त्या तथा प्रकृतेऽपि, श्रु ॥ निरञ्जनः परमं साम्य मुपैति, मुक्तश्शिवसमो भवेदित्यादिश्रुतिस्मृत्यनुरोधेनच, एवकार स्येवाऽर्थकत्वाऽवगमेन ब्रह्मोपासको ब्रह्मसदृशो भवतीत्यर्थलाभेन, परमेश्वरप्राप्त्य नन्तरकालिक न्तत्परमसादृश्याऽवाप्तिपूर्वक न्तत्सायुज्यमेव परममुक्ति रित्यवगम्यमानत्वात्।

नच, मुक्तेः दशम स्त्व मसीतिवाक्यसदृक्षतत्त्वमसीतिमहावाक्योपदेशैकलभ्यतया जीवब्रह्मैक्यरूपत्व मवगम्यतइति शंक्यम्। तत्व मसीतिवाक्ये दशम स्त्वमसीतिवाक्यसादृश्यधियो भ्रान्तिरूपत्वेन तस्य वाक्यस्य भवदिष्टाऽर्थसाधकत्वाऽयोगात्।

तथाहि, श्वेतकेतुम्प्र त्युद्दालकेन 'ऐतदात्म्य मिदग्ं सर्वमिति सर्वस्याऽपि तदन्तर्यामिकत्वरूप म्परमेश्वरात्मकत्वं सामान्यतः प्रतिज्ञाय, तत्समर्थनार्थतया विशिष्य प्रयुक्तस्य स आत्मा तत्त्वमसीति वचनस्य त्वमपि तदन्तर्यामिकत्वरूपपरमेश्वरात्मकोऽसी त्यर्थकत्व मवगम्यते।

नच, तत्त्व मसीतिवचन न्तादृूप्यनिबन्धनत्वएव स्वरसं। नतु, तदन्तर्यामिकत्वनिबन्धनत्व इति शंक्यम्, श्रु ॥ यो विज्ञाने

तिष्ठन् , य आत्मनि तिष्ठन्नित्यादिबहुश्रुत्यन्तराऽनुरोधे नोक्तार्थस्यैव युक्ततरत्वात् ।

नाऽपि , श्रु॥ प्रज्ञानं ब्रह्म । अयमात्मा ब्रह्मेत्यादौ ताद्रूप्यस्याऽऽम्नातत्वेन तदनुरोधेन तत्त्व मसीतिवचन न्ताद्रूप्यनिबन्धनमेवेति चोद्यम्। प्रज्ञानम्ब्रह्मेत्यादिवचनाना न्तदन्तर्यामिकत्वेनाऽप्युपपन्नतया यो विज्ञाने तिष्ठन्नित्यादिवचनाना न्तु ताद्रूप्यपरत्वेऽनुपपन्नतया सर्वश्रुत्यैकार्थ्याय तदन्तर्यामिकत्वरूपाऽर्थग्रहणस्यै वोचितत्वात् ।

अन्यथा , परस्परविरोधेन श्रुतिसूक्तीना मबोधकत्वस्याऽपरिहार्यत्वाच्च । दशम स्त्व मसीति वचनस्याऽज्ञानास्पदे जीव उपयुक्तत्वेपि तदनास्पदे ब्रह्मणि तत्त्व मसीति वचनस्याऽयोग्यतापराहतत्वाच्च ।

ननु , प्रकृतेपि - तत्त्वमसीतिवाक्यस्य जीव मुद्दिश्यैव प्रयुक्तत्वेन तस्यचाऽज्ञानास्पदत्वस्य सर्वसम्प्रतिपन्नत्वेनच तस्यैव ब्रह्मत्वोपदेश स्सार्थक इति चे न्न । दशमजनस्याऽज्ञानास्पदत्वेन तत्र दशम स्त्वमसीतिवाक्योपदेशस्य नाऽह न्दशम इ . त्येवंरूपाऽज्ञानविनिवर्तकत्वेपि प्रकृतेऽज्ञानास्पदत्व मन्तरा जीवस्यैवाऽनुपलब्धेः , नाऽह म्ब्रह्मे त्यज्ञानस्य स्वप्रकाशे ब्रह्म ण्यनुपपन्नत्वेन तदुद्दिश्य तत्त्वमसीति वाक्योपदेशवैयर्थ्यात् ।

नच , तत्त्वमसी त्युपदेशोऽज्ञानिनमेव जीव मुद्दिश्य प्रवृत्तत्वेन युज्यत इति वाच्यम् विकल्पाऽसहत्वात् ।

तथाहि , अय मुपदेशः किं जीव मुद्दिश्य ? उत ब्रह्मोद्दिश्य प्रवर्तते ? आद्ये महिष मुद्दिश्य त्व मश्वइतिवत् जीवस्याऽब्रह्मतया त मुद्दिश्य त्व म्ब्रह्मेतिसहस्रकृत्व उपदेशे प्यस्य ब्रह्मत्वाऽसाधकत्वेन

नैरर्थक्य मवार्यम् । द्वितीयेपि ब्रह्मणो नाऽहं ब्रह्मे त्यज्ञानाऽनास्पद-त्वेना ऽस्योपदेशस्य सार्थक्यं दुर्वचम् ।

ननु, नेदं वाक्यं जीवंवाऽथ ब्रह्म प्रति प्रयुक्तम् ।

किन्तु, अज्ञानेन जीवभाव मुपगत म्ब्रह्मोद्दि श्येतिचे न्न । ब्रह्म ण्यज्ञानस्य दुर्निरूपतया सहस्ररश्मे रन्धकारेण कृष्णाऽङ्गारभावस्येव तेन तस्य जीवभावस्या ऽनुपपत्तेः ।

नच, त त्त्व मसीति नवकृत्वो ब्रह्मभावोपदेशेन जीवस्य ब्रह्मेत रत्वाऽभ्युपगमे श्रुति र्व्याकुप्ये तदन्यथाऽनुपपत्त्या जीवब्रह्मैक्यरूपैव मुक्ति रेष्टव्येति चोद्यम् ।

तन्न, नवकृत्वोपि दृष्टान्तदार्ष्टान्तिकवाक्यै र्जीवपरभेदस्यैव स्फुटीकृतत्वेन, एकवारमपि पराऽभिमतदशमविवेकव्याधकुलसंवर्धित राजकुमारादिदृष्टान्ताऽनुपदेशेनच जीवब्रह्मणो रभेदे नाऽल्पीयोपि श्रुते स्तात्पर्य मस्तीति छान्दोग्यविचारे ब्रह्मपथीयवेदपथे सविस्तर मुपपादि तत्वेन त त्वमसीति वाक्यस्य जीवम्प्रति ब्रह्मभावबोधकत्वाऽभावात् ।

ननु, श्रु ॥ पर ञ्ज्योति रुपसम्पद्य स्वेन रूपेणाऽभि निष्पद्यत इतिश्रुत्या मुक्तस्य ब्रह्मभावापत्ते राम्नातत्वेन तस्याश्च स्वेनेति पदेन स्वीयत्वाम्नानेन जीवस्य ब्रह्मभिन्नत्वे ब्रह्मभावस्य स्वीयत्वाऽनुप पत्त्या जीवब्रह्मैक्यरूपैव मुक्तिरिति पर्यवस्यतीतिचे न्नैवम् । स्वेनेति शब्देन ब्रह्मप्राप्तस्य जीवस्य मलतिरोहितं ब्रह्मसदृशगुणं स्वरूपं पूर्वं सदेव मलाऽवरणापगमा दाविर्भवतीति तस्मा त्तत्स्वरूप मपूर्वसिद्धमेव । नतु स्वर्गव दागन्तुक मित्यस्याऽर्थस्य सम्पद्याविर्भावाऽधिकरणे राद्धान्ति

तत्वेन स्वेनेतिपदेन ब्रह्मसदृशस्य स्वीयस्यैव भावस्य विवक्षितत्वेन तेन जीवब्रह्माऽभेदस्याऽनवगमा न्मुक्ते र्ब्रह्मैक्यरूपत्वाऽसिद्धेः।

किञ्च, जीवस्य ब्रह्माऽभिन्नत्वे परञ्ज्योति रुपसम्पद्येति ब्रह्म प्राप्तिश्रवणस्याऽनुपपत्ते स्तदन्यथाऽनुपपत्त्या जीवपरभेदस्याऽवश्याऽभ्युपेय त्वेन तेन मुक्ते स्सायुज्यरूपत्वाऽनपायाच्च।

अपिच, श्रु॥ यएष सम्प्रसादोऽस्मा च्छरीरा त्समुत्थाय परञ्ज्योति रुपसम्पद्येति शरीरा दुत्क्रम्य ब्रह्म प्राप्तस्यैव स्वीयभावापत्ते राम्नातत्वेन स्वस्य ब्रह्माऽभिन्नत्वे शरीरा दुत्क्रान्ते र्ब्रह्मप्राप्तेश्चाऽनुपपन्न त्वेन तदन्यथाऽनुपपत्या स्वेनेतिपदस्य ब्रह्मसदृशस्वीयभावपरत्वस्यै वौचित्याच्च।

ननु, सू॥ उत्तराच्चे दाविर्भूतस्वरूपस्त्विति सूत्रभाष्ये 'किमात्मक मिदं शरीरा त्समुत्थानं? किमात्मिकावा स्वरूपेणाऽभि निष्पत्ति? रित्याशङ्क्य देहाद्युपाध्यविविक्तस्यैव सतो जीवस्य श्रुति कृतं विवेकविज्ञानं शरीरा त्समुत्थानं विवेकविज्ञानफलं स्वरूपेणाऽभि निष्पत्तिः। केवलात्मस्वरूपाऽवगतिरिति विवृतत्वेन।

अन्यत्रच, शरीराऽभिमाना त्समुत्थायेतिच विवरणेन शरीरा त्समुत्थानं नोत्क्रान्तिरूप मितिचे न्न। शरीरपदस्य तदभिमानपरत्वे लाक्षणिकत्वेन दुष्टत्वात्। श्रुतिकृतविवेकविज्ञानस्यैव शरीरा त्समु त्थानरूपत्वाऽभ्युपगमेपि तेनैव ब्रह्मभावस्य निष्पन्नतया पुनः परञ्ज्योति रुपसंपद्येति ब्रह्मप्राप्तिश्रवणस्य, ततोपि स्वेन रूपेणाऽभिनिष्पद्यत इति ब्रह्मसदृशस्वीयभावाऽभिनिष्पत्तिश्रवणस्यच, नैरर्थक्यापत्ते स्वार्य तया भवदीयविवरणस्याऽत्यन्तश्रुतिविरुद्धत्वात्। तस्मात् - शरीरा

दुत्क्रान्त्यनन्तरं ब्रह्मप्राप्तिपूर्वकब्रह्मसदृशगुणस्वीयभावनिष्पत्तिरेव वेदाऽर्थ इति निर्धार्यते ।

ननु, भवता ब्रह्मवि दाप्नोति परं, परञ्ज्योति रुपसंपद्येत्यादि वचनाना म्ब्रह्मप्राप्तिपरत्व मभ्युपगम्यते । त दयुक्तं । बृहदारण्यके, असतो मा स द्गमय । तमसो मा ज्योति र्गमय। मृत्यो र्मा ऽमृत ङ्गमयेति । सय दाहाऽसतो मा स द्गमयेति । मृत्युर्वा असत् सदमृतम् । मृत्यो र्माऽमृत ङ्गमयाऽमृत म्मा कुर्वित्ये वैत दाह । इति । सच्छ ब्दोक्ताऽमृताऽवाप्त्यर्थत्वश्रुते रमृताऽभेदाऽभिव्यक्त्यर्थतया व्याख्यातत्वेन मुक्तिफलप्रतिपादकेषु वाक्येषु ब्रह्माऽवाप्तिश्रवणाना न्तद्भावापत्तिपरत्व मवगम्यतइति श्रीमदप्पयदीक्षितेन्द्रै र्न्यायरक्षामणौ समर्थितत्वादितिचेत् उच्यते । मुक्तस्य परमेश्वरप्राप्त्यनन्तरं परमेश्वरसदृशभावाऽऽपत्त्यासह परमेश्वरसायुज्यस्यापि श्रूयमाणत्वेन तत्प्राप्तिवचनाना न्तद्भावापत्तिरूप गौणाऽर्थकल्पनस्य लाक्षणिकत्वपुनरुक्तत्वादिदोषदूषितत्वेन 'अमृत म्मा कुर्वितिवचनस्या प्यमृतपदवाच्यपरमेश्वरसदृशमि त्यर्थकत्वमेव समञ्जस म्बहुश्रुत्यन्तराऽनुरोधा दि त्यवगम्यते ।

तथाहि, ब्रह्मवि दाप्नोति परं, परंज्योति रुपसंम्पद्य, ब्रह्माऽ प्येति, परात्परं पुरुष मुपैति, अल ब्रह्म समश्नुते, मुनि र्गच्छति भूतयोनिम् । मृत्यो र्माऽमृत ङ्गमय । य मेवैष वृणुते तेन लभ्यः । एव मादी न्यनन्ता न्यौपनिषदानि वचनानि मुक्तस्य परमेश्वर प्राप्तिं विदधति । निरञ्जनः परमं साम्य मुपैतीत्यादीनितु तस्य परमेश्वरसदृशभाव मुपदिशन्ति । सोऽश्नुते सर्वा न्कामा न्सह ब्रह्मणा इत्यादीनितु परमेश्वरसहयोगरूपं सायुज्यं निर्धारयन्ति ।

एवञ्च, परमेश्वरोपासकः परमेश्वरप्राप्त्यनन्तर न्तत्सादृश्य पूर्वक न्तत्सायुज्य मश्नुतइति महावाक्यार्थ स्सम्पद्यते।

नच, ब्रह्मप्राप्तिवचनाना न्तद्भावापत्तिपरत्व मभ्युपगत मिति शंक्यम्। ब्रह्मप्राप्तिवचनाना मनन्तानां गौणाऽर्थपरत्वस्याऽत्यन्त दुष्टत्वात्। मुक्तोपसृप्यव्यपदेशादितिसूत्रविरुद्धत्वाच्च। परञ्ज्योति रुपसंपद्य स्वेनरूपेणे त्यादिश्रुतिवचनै स्तद्भावापत्ते र्ब्रह्मप्राप्त्यनन्तरभाव्यत्वेन स्पष्ट माम्नाततया ब्रह्मप्राप्तिवचनाना न्तद्भावापत्तिपरत्वस्याऽनर्थत्वाऽवगमाच्च।

ननु, श्रु॥ ब्रह्मवि द्ब्रह्मैव भवति, ब्रह्मैव स न्ब्रह्माऽप्येती त्यादिबहुश्रुत्यनुरोधेन ब्रह्मप्राप्तितत्सादृश्यादिप्रतिपादकवचनानामपि तद्भावापत्तिपरत्व मुन्नीयत इतिचे न्न। श्रु॥ निरञ्जनः परमं साम्य मुपैतीत्यादिवचनाऽनुरोधेन ब्रह्मैवेत्यादिवचनगतैवकार स्येवार्थकत्वस्य समर्थितत्वात्।

अन्यथा, तत्सादृश्यप्रतिपादकानि वचनानि पीड्येरन्।

किञ्च, श्रु॥ ब्रह्मैव स न्नित्यत्र एवकारस्य ब्रह्माऽप्येतीति प्राप्तिवचनस्यच तद्भावापत्तिपरत्वाऽभ्युपगमे, ब्रह्माऽप्येतीतिवाक्य मानर्थक्य मश्नुवीत। तस्मा त्तत्र एवकार स्येवाऽर्थपरत्वमेव श्रुति तात्पर्याऽनुरुद्धम्।

अपिच, वैयाघ्रभूमिका न्धृतवन्त मतिकुशल मुद्दिश्य व्याघ्रएवेति व्यवहारवत्. ब्रह्मणा परमसाम्य मुपेयिवांस मुद्दिश्य ब्रह्मैवेतिव्यवहारो नाऽनुपपन्नः। अथ ब्रह्म ण्येकीभूत मुद्दिश्यतु ब्रह्मप्राप्ति स्तत्सादृश्य न्तत्सायुज्यञ्च निगद्यमान मुपपन्नमिति वक्तुं न

निरङ्कुशतुण्डा दन्यःक्षमेत । प्राप्ते स्सादृश्यस्य सायुज्यस्यच भेदैक निबन्धनत्वात् । तस्मा त्परमं साम्य मुपैति , ब्रह्मैव भवतीत्या दीनि वचनानि समानार्थकानी त्यत्रैव उपपत्तिसूचित न्तात्पर्यलिङ्ग म्मव त्यनुकूलम् । एव म्ब्रह्मसादृश्यविषयोपपत्तिरूपतात्पर्यलिङ्गसह कृतबहुश्रुत्यन्तराऽनुरोधेन 'अमृत म्माकुर्विति बृहदारण्यसूक्ते रपि अमृतपदवाच्यपरमेश्वरसदृश म्मा कुर्वित्यर्थकत्वमेव साम्प्रतम् ।

ननु , अमृत म्मा कुर्वितिवचनस्य , मृत्योर्माऽमृत ङ्गमये तिवाक्यविवरणरूपतया ब्रह्मप्राप्तिवचनस्य तद्भावापत्तिरूपाऽर्थपरत्व न्निर्धारयतीतिचेत् , यद्यपीद म्माऽमृत ङ्गमयेतिवाक्यविवणरूपमेव ।

तथापि , न ब्रह्मप्राप्तिवचनाना न्तद्भावापत्तिपरत्वनिर्धारण क्षमम् । निगमाऽन्तेषु बहुषु ब्रह्मप्राप्ते स्तत्सादृश्यस्यं तत्सायुज्यस्य चाऽभ्यासेन प्रतिपादितत्वेन त स्याऽर्थस्य बहुश्रुतितात्पर्यविषयतया प्रकृतवचनस्य तद्भावापत्तिप्रतिपादकत्वे विप्रतिषेधाऽधिकरणविषयताया दुर्वारत्वात् । तस्मा न्माऽमृतङ्गमयेतिवाक्यविवरणविधयैव तद्वा क्येनाऽसिद्ध म्मुक्तिप्रकरणगतवचनाऽन्तरसिद्ध म्परिशिष्ट म्ब्रह्मसादृश्य रूप मेवाऽर्थं समर्पयती त्यवश्य मेष्टव्यम् ।

अन्यथा , बहुश्रुत्यन्तरविरोधस्य दुरुद्धरत्वात् ।

तथाच , इह , श्रु ॥ ब्रह्मैव स न्ब्रह्मैव भवती त्येवञ्जातीय कानि तद्भावापत्तिपरतयाऽभेदसाधकानि वचनानि द्वित्राण्येव श्रूयन्ते । अथ प्राप्तिबोधकतया सादृश्यविधायकतया सायुज्यसाधकतयापि भेद साधकानितु वचांसि परश्शतानि समाम्नायन्ते ।

अत्र, भेदसाधकभूयोवचनाऽनुरोधेन ब्रह्मैव भवतीत्यादि कतिपयवचनगतैवकार स्यैवार्थपरत्वसम्प्रतिपत्त्या तद्भावापत्तिपराणामेव तत्सदृशभावापत्तिपरत्वकल्पनं भवति समञ्जसं। सू॥ विप्रतिषेधे भूयसां स्या त्स्वधर्मत्वमिति न्यायाऽनुरोधात्। नतु अमृतम्भा कुर्वि त्यल्पवचसा ब्रह्मप्राप्तिवचनानां भूयसां न्यायसिद्धस्वधर्मत्वप्रहाणमि त्येतेन यत्परैः ब्रह्मप्राप्तिवचनाना न्तद्भावापत्तिपरत्व मुक्त न्तत्पूति कूष्मांडीकृत मिति दिक्।

ननु, श्रु। यत्र नान्य त्पश्यति। नतु त द्वितीय मस्ति ततोऽन्यद्विभक्त य त्पश्येदित्येवमादीनि वचना न्यविभागेनैव परमात्मान न्दर्शयन्ति। यथादर्शनमेव फलं युक्तम्। तस्मा द्ब्रह्मैक्यमेव मुक्ति दशायां निष्पाद्य मितिचे न्नैवम्।

यत्र नाऽन्य त्पश्यतीत्यादिवचनस्य निरतिशयानन्दस्वरूपे ब्रह्म ण्यनुभूयमाने ततोऽन्य त्किमपि न पश्य त्यनुभविते त्यर्थकतया तेन ब्रह्मैक्यरूपाऽर्थाऽलाभात्।

नच, त द्वितीयमस्ती त्यनेन भेदो निषिध्यत इति शंक्यम्। ततोऽन्य द्विभक्तमि त्यनेन मुक्तिदशायां विभक्तत्वेन विद्यमानस्यैव द्वितीयस्य निषेधेन त्वविभागापन्नद्वितीयवस्तुनिषेधाऽनवगमात्।

ननु सू॥ अविभागो वचनादिति सूत्रेण ब्रह्मैक्यं निर्धारित मितिचे न्न। द्वयोरेवाऽविभागस्य समुचिततया ब्रह्म ण्येकस्मि न्नविभाग व्यवहारस्याऽनौचित्यदोषदूषितत्वेन तेन मुक्तस्य परमेश्वरसायुज्यमेवाऽ त्यन्तसंश्लेषविशेषितमि त्यवगम्यमानत्वात्।

नच, यथोदकं शुद्धे शुद्ध मासिक्त न्तादृगेव भवति। एवं विजानत आत्मा भवति गौतमेति कठवचनेन, यथा नद्य स्स्यन्दमाना स्समुद्र इति। नदीसमुद्रनिदर्शनेनच, नीरनीरमेळनव दैक्यमेव श्रुतितात्पर्यसिद्ध मिति चोद्यम्। प्रकृतश्रुतिसूक्त्योर्जीवपरयो स्सायुज्यदशायां सम्पन्नाया अविभागपत्ते रात्यन्तिकत्वमात्रप्रतिपादन परत्वात्। अन्यथा, सहब्रह्मणेत्यादीना म्परश्शताना मीश्वरसायुज्यादि प्रतिपादनद्वारा भेदबोधकाना मानर्थक्यात्।

ननु, मुक्तिदशाया ञ्जीवपरयोः क्वचि द्भेदस्य क्वचि दभे दस्यच श्रुतत्वेन भेदनिर्देश स्त्वभेद उपचर्यते। स भगवः कस्मि न्प्रतिष्ठित इति स्वे महिम्नीति आत्मरति रात्मक्रीडइतिच दर्शना दित्य विभागेन दृष्टत्वादितिसूत्रभाष्यउक्ततया अभेदस्यैव पारमार्थिकत्वाऽ वगमा दैक्यमेव परममुक्ति रितिचे न्न। दम्पत्योस्सख्यो स्समानजाति गुणयोश्च भेदएवाऽभेदनिर्देशस्य प्रचुरव्यवहारसिद्धतया तदानु गुण्यैनैव श्रुत्याशयग्रहणस्य समुचितत्वात्। स्वे महिम्नीत्यादि वचनाना मीश्वरैकत्वनिर्दिधारयिषया प्रवृत्तत्वेन तत्र भेदनिर्देशस्यैवाऽ नुपलम्भाच्च।

नच, मुक्ते स्सायुज्यरूपत योपासनालभ्यत्वे तस्या आत्म ज्ञानैकफलत्वप्रसिद्धि र्भज्येतेतिशंक्यम्। उपासनाया एव ज्ञानशब्दित त्वेन मुक्ते स्सायुज्यरूपत्वाऽनतिवृत्तेः।

अतएव, यमे वैष वृणुते तेन लभ्यइति परमेश्वरप्राप्ति न्तत्प्रसादैकलभ्या मुपदिशति श्रुतिः। तत्प्रसादस्यच। श्रु॥

मुमुक्षुर्वै शरण महं प्रपद्ये । तमेवचाऽद्यं पुरुष म्प्रपद्यइत्यादिश्रुति स्मृतिभिः प्रपत्तिशब्दितपरभक्तिभाव्यत्व माम्नायते ।

अतएव , श्रु ॥ संसारमोक्षस्थितिबन्धहेतुरिति श्रुतिः । सू ॥ पराऽभिध्यानात्तु तिरोहित न्ततो ह्यस्य बन्धविपर्ययाविति सूत्रञ्च जीवगतबन्धमोक्षयोः परमेश्वरायत्तत्व मुद्घुष्यतः ।

एवंसति , हन्त बन्धस्य स्वाऽज्ञानमूलतां मोक्षस्य स्वज्ञान हेतुताञ्च निबध्नन्तः परे श्रुतिसूत्रयो र्द्वय म्प्रतिरुन्धन्तो ति विदितं ।

ततएवच , श्रु ॥ तंग्ंह देव मात्मबुद्धिप्रकाशं , स नो देव श्शुभया स्मृत्या संयुनक्तु । धियो यो नः प्रचोदयात् । ईश्वरा ज्ञान मन्विच्छेदित्यादिभि श्श्रुतिस्मृतिभि र्जीवगताऽनादिमलतिरोहित ज्ञानशक्तिप्रकाशनस्य परमेश्वरायत्तत्व माम्नायते । एतेन दशम स्त्वमसीतिवाक्यसदृक्षतत्त्वमसिवाक्यजन्यज्ञानैकलभ्या म्मुक्ति मभि मन्वानाः परे पराहताः ।

आतश्च , निगमान्तार्थनिर्धारणपरो भगवा नाचार्योपि । सू । त दोकोग्रज्वलन न्तत्प्रकाशितद्वारा हार्दाऽनुगृहीत श्शताऽधिकयेति परमेश्वराऽनुग्रहस्यैव तत्प्राप्तिसाधनतां निरचैषीत् ।

ननु , तदोकोग्रज्वलनमिति सूत्रं सगुणविद्याविषय मित्युक्त मितिचे न्न । कृत्स्नस्यापि शास्त्रस्य सगुणविषयतया मुक्ते स्सगुण विद्याविषयत्वाऽविशेषात् ।

अतएव , भगवा न्सूत्रकारः - सू ॥ सङ्कल्पादेवतु तच्छ्रुतेरि त्यधिकरणे श्रु ॥ स यदि पितृलोककामो भवति सङ्कल्पादेवाऽ स्य पितर समुत्तिष्ठन्तीत्यादिश्रुति म्प्रमाणीकुर्वाणो मुक्तस्य सङ्कल्पमात्रेण

सकलभोग्यवस्तुसिद्धि माह । एत त्सर्वं सगुणब्रह्मसदृशभावए वोपपद्यते । पररीत्या निर्गुणे ब्रह्म ण्यैक्यं गतस्य भोग्यवस्तु विषयसंकल्पाऽसम्भवात् । एवम् , सोऽश्नुते सर्वा न्कामा न्सह ब्रह्मणेति श्रुति म्प्रमाणयन् । सू ॥ भोगमात्रसाम्यालिंगाच्चेति सर्वकामोपभोगविषये साम्य म्मुक्तस्य सिद्धान्तीचकार ।

तथा , स एकधा भवतीत्यादिश्रुति म्प्रमाणयन् । सू ॥ द्वादशाहव दुभयविध म्बादरायणोत इति मुक्तस्य सशरीरत्व मशरीर त्वञ्च स्वेच्छया सम्भवतीति निरचैषीत् । न ह्यशरीरत्वमेव मोक्ष इ त्यभाणीत् । एत त्सर्वं सगुणब्रह्मसदृशभावं गतस्यैव समुपपद्यते ।

ननु , सू ॥ भावं जैमिनिरिति सूत्रशाङ्करभाष्ये ' यद्यपि निर्गुणायामेव विद्याया मनेकधाभावविकल्पः पठ्यते । तथापि विद्य मानमे वेदं सगुणावस्थाया मैश्वर्यं म्भूमविद्यास्तुतये सङ्कीर्त्यत इत्यत स्सगुणविद्याफलभावे नोपतिष्ठत इत्युक्त मतो न विरोध इतिचे न्न । श्रुतौ सूत्रेवा कुत्रापि निर्गुणविद्याया स्तत्फलस्यवाऽप्रस्तावेन निर्गुणविद्या विपरीता सगुणविद्या निर्गुणविद्यास्तुतयइति वचनस्य निन्दावचनस्य प्रशंसापरत्वप्रसाधनवत् हासावहत्वेनाऽनुपादेयत्वात् । मुक्तौ सवि शेषब्रह्मसदृशभावस्यैवाऽभिनिष्पद्यमानत्वात् ।

अन्यथा , शास्त्रोक्तसत्यकामत्वसत्यसंकल्पत्वादिगुणजातं न सम्पद्येत । श्रु ॥ सर्वांश्च लोका नाप्नोति सर्वांश्च कामां स्त मनु विद्य विजानाती त्युपक्रमेण तथै वोपसंहारेणच प्रतिपादितं सकललोक कामाऽवाप्तिफलञ्च नोपपद्येत ।

किञ्च, पर्यङ्कविद्यायाम् । श्रु ॥ तं ब्रह्मगन्धः प्रविशति ब्रह्मरसः प्रविशति । सर्व मिद मिति प्रागुक्तसकलगुणाऽभिव्यक्ति मत्वञ्च न सङ्कुच्येत । मुक्तिदशाया ञ्जीवस्य निर्गुणब्रह्मभावे सम्पद्य माने श्रुतौ ब्रह्मणो गन्धरसौ कीदृशौ सम्भवेताम् । हन्त मुक्तस्य गगनारविन्दगन्धकाशफलरसयोः प्राप्ति मुपदिशन्ती भगवती श्रुतिः कथमिव यथाऽर्थवचना भवेत् । तस्मात्, श्रु ॥ निरञ्जनः परमं साम्य मुपैतीत्यादिश्रुत्यनुरोधेन जीवस्य ब्रह्मप्राप्त्यनन्तरं सगुणब्रह्मपर मसदृशभावापत्तिपूर्वक न्तत्सायुज्यमेव मुक्ति रित्यनवद्यम् ।

ननु, मुक्त म्प्रति, सू ॥ जगद्व्यापारवर्जमिति जगत्कर्तृ त्वस्य पर्युदस्ततया परमेश्वरेण साम्यं न सम्भवतीतिचे न्न । जगद्व्यापार स्याऽभावेपि । सू ॥ उत्तराच्चे दाविर्भूतस्वरूपस्तु, श्रु ॥ सत्य काम स्सत्यसङ्कल्पइत्यादिना सत्यसंकल्पत्वादिधर्माणां श्रुतिसूत्र सिद्धत्वेन साम्यस्य सिद्धेः ।

नच, कतिपयधर्मसादृश्या त्साम्यस्य सिद्धावपि परमसाम्यं न सिध्यतीति शंक्यं । परिमाणरूपैकधर्मसाम्येनाऽपि तुलाधृतयो स्सुवर्णशिलाशकलयो रत्यन्तसाम्यव्यवहारदर्शना त्प्रकृते भूयोधर्मसादृ श्येन परमसाम्यव्यवहारस्य सुसङ्गतत्वात् ।

नाऽपि, सू ॥ भोगमात्रसाम्येति सूत्रे मात्रपदेन ब्रह्मणा भोगा दन्यत्र साम्यस्य व्यावृत्ततया परमसाम्यं न सिध्यतीति चोद्यम्, सूत्रगतम ात्रपदस्य साकल्यार्थकतयाऽवधारणाऽर्थकत्वाऽभावात् ।

यथा, ब्रह्म सकला न्कामा न्भुंक्ते। तथा, मुक्तोपीति भाष्य दर्शनात्। सर्वभूतिविशिष्टब्रह्मा ऽ नुभवरूपब्रह्मभोगसाम्यविषयतया परमं साम्य मुपैतीतिश्रुत्युक्तपरमसाम्योपपादना ऽ र्थत्वाच्च। तस्मा न्मुक्तस्य परमसाम्यापत्तिव्यवहारोऽत्यन्त मुपपन्नएवेति दिक्।

एवञ्च, परमेश्वरपरमसाम्यापत्तिपूर्वकतत्सायुज्यस्यैव परममुक्तितया शिवोपासनया भ्रमरकीटन्यायेन लभ्याया स्तस्या अभिव्यञ्जकं साधकंच शिव लिङ्गधारणात्मकपाशुपतव्रत मधिकारित्वसाधकतया श्रु ॥ व्रत मेत च्छाम्भव न्तत्समाचरे न्मुमुक्षुर्नपुनर्भवायेति श्रुति र्विदधातीति युक्तम्।

ननु, द्वा सुपर्णा सयुजा सखाया विति बद्धदशाया मपि जीवस्य ब्रह्मणा सायुज्यं श्रूयते। अथ यदि मुक्तदशायामपि तदेव चे त्प्राप्य न्तर्हि मोक्षसाधनप्रयासै रल मिति चेत्। उच्यते। यद्यपि बद्धदशायामपि जीवस्य ब्रह्मसायुज्यं विद्यतएव।

तथापि, तदा, मलतिरोहितज्ञानशक्तिकतया परमेश्वर सायुज्यफलभूतो निरतिशयानन्दो न स्फुरति। मुक्तदशायान्तु परमेश्वर प्रसादव्यपगतमलावरणतया सम्यक् स्फुरति।

अतएव, श्रु:: हिरण्यनिधिं निहित मक्षेत्रज्ञाइति हिरण्य निधिदृष्टान्तेन परमेश्वरसायुज्यं नित्यसिद्धमेवाऽज्ञातमिति श्रुत मि त्यलम्।

ननु, भवता सगुणब्रह्मसायुज्यमेव परममुक्तिरिति निगद्यते त दयुक्तम्। परै स्सगुणब्रह्मसायुज्यस्याऽन्तवत्त्वस्य प्रतिपादितत्वात्।

तथाहि, छान्दोग्यभाष्ये, त योर्ध्व माय न्नमृतत्व मेतीति सगुणब्रह्मोपासकस्य प्रागेस्तइ नाड्या गमनं साऽपेक्षमेवचाऽमृतत्वम् न साक्षा न्मोक्षइति गम्यते। त दपराजिता पूः। त दैरम्मदीयं सर इत्याद्युक्त्वा तेषा मेवैष ब्रह्मलोक इति विशेषणात्।

नच, न स पुन रावर्ततइति, इम म्मानव मावर्त न्नावर्तन्ते। इत्यादिश्रुतिविरोध इति शङ्क्यम्, इम म्मानवमिति विशेषणा त्तेषा मिह न पुनरावृत्ति रस्तीतिच, यदि ह्येकान्तेनैव नावार्तेर न्निम म्मानव मिहेतिच विशेषण मनर्थकं स्यात्। इम मिहे त्याकृतिमात्र मुच्यतइतिचे न्न। अनावृत्तिशब्देनैव नित्याऽनावृत्त्यर्थस्य प्रतीतत्वा दाकृतिकल्पनाऽनर्थिका। अत इयमिहेतिच विशेषणाऽर्थवत्त्वायाऽन्य त्रावृत्तिः कल्पनीयाइति निरूपितत्वा दितिचेत्, मैवम्। न स पुन रावर्ततइति श्रुति मेकान्तेनैवाऽनावृत्तिप्रतिपादनतात्पर्यवती मभिमन्वता आचार्येण सू॥ अनावृत्ति श्शब्दादित्येव शास्त्रस्योपसंहृतत्वेन तदतिरेकेण निर्गुणमुक्ते रनभिधानेनच सगुणब्रह्मसायुज्यस्यैव परम मुक्तित्वाऽवगमात्। शास्त्राऽविषयायामेव स्वाऽभिमतायां निर्गुणमुक्तौ श्रद्धां, शास्त्रसिद्धसगुणमुक्तिविषयवैरस्यजननसाध्यां मन्वानै रन्धान्वेषणतत्परैः परै रिम मिहेतिविशेषणस्वारस्येनाऽऽपादितस्याऽन्त वत्त्वस्य श्रुतितात्पर्याऽविषयत्वेनाऽनुपादेयत्वात्। अहो यैव श्रुति रनावृत्तिं कण्ठरवे णोपदिशति, यामेवच प्रमाणय न्नाचार्यो निर्धारय त्यनावृत्तिं संसारे। सैव श्रुति रिम मिहेतिच पदाभ्या मन्यत्रावृत्तिं

सूचयतीति कि मत श्चित्ततरम् ! यदीयं श्रुति रन्यत्रावृत्तिं मनसि निधाय यहि रिहैवाऽनावृत्तिं निगदे त्तर्हि तया कथ मनावृत्ति स्समर्थिता स्यात्। यदिच भगवा न्सूत्रकार इम मिहेतिच पदाभ्या मन्यत्रावृत्ति मनुमन्येत। तर्हि अनावृत्ति रिहैव शब्दादित्येव सूत्रयेत्। तस्मा च्छुतिसूत्राभ्या मुपदिष्टा विदुषोऽनावृत्ति रात्यन्तिक्येव। इम म्मानव मिति श्रुता विम मिति विशेषणेन तदनुभूयमानस्य बहुदुःखकरम्बिततया हेयत्वप्रकटनाऽर्थत्वेन ब्रह्मानन्दस्य कालविशेषाऽवच्छेदाऽर्थत्वाऽभावात्।

किञ्च, सर्वकल्पाना मविशेषेणै वेहशब्दवाच्यत्व मवश्य मभ्युपेयम्।

अन्यथा, अन्यत्राऽऽवृत्ति स्स्या दिहाऽनावृत्तिस्स्या दिति वाक्यभेदप्रसङ्गात्। एकया या त्यनावृत्ति मन्ययाऽऽवर्तते पुनरिति वैषम्याऽभावस्य स्मृतत्वाच्च।

ननु, सगुणब्रह्मविदः क्रममुक्तिः। कार्याऽत्ययं तदध्यक्षेण सहाऽतः परमिति सूत्रात्। परब्रह्मविदस्तु सद्योमुक्ति रितिचे न्न। सगुणा दन्यस्य ब्रह्मणोऽप्रमितत्वेन तद्भावापत्तिरूपमुक्ते रभावा दमुक्ते रपि क्रममुक्ते रुपादेयत्वात्। कार्याऽत्ययइति सूत्रविषयायाः क्रम मुक्तेः कार्यभूतहिरण्यगर्भलोकप्राप्तविषयत्वाच्च।

नच, हिरण्यगर्भस्यैव सगुणब्रह्मत्वमिति शङ्क्यम्। हिरण्य गर्भस्य क्षेत्रज्ञतया तस्याऽनुपास्यत्वात्। नारदादीनां सूर्यमण्डल

मभित्वा ब्रह्मलोकगमन स्योपाख्यातत्वेन हिरण्यगर्भलोकम्प्र त्यर्चिरादि गते रनपेक्षितत्वात्। अर्चिरादिगतेः परब्रह्मप्राप्तिसाधनत्वाज्ञानाच्च। तस्मा त्कार्यभूतहरिहिरण्यगर्भादिलोकगतानामेव क्रममुक्तिः। कारणभूत सगुणब्रह्मप्राप्तानां सद्योमुक्तिरेवे त्यलम्।

ननु, सू॥ मुक्तः प्रतिज्ञानादितिसूत्रेण निर्गुणविद्या विषयं कैवल्य मुपपादयत स्सगुणमुक्ते रन्तवत्व माचार्यस्य सम्मत मिति चे न्न। मुक्तः प्रतिज्ञानादिति सामान्यवचनस्य भोगमात्रसाम्यलिङ्गादि त्यादिसूत्रविहितविशेषमुक्तावेव पर्यवसानस्य छागपशुन्यायेन सिद्धत्वात्। विशेषवचनानां निर्विशेषपरत्वसमर्थनस्य दुश्शकतया सामान्यवचनानां तद्विषयत्वसमर्थनेन निर्गुणस्य सूत्रारूढतासमर्थनपरा परेषां शैली नाऽप्रहता। स्पष्टो ह्येकेषामिति सामान्यवचनस्य निर्विशेषविषयत्वं समर्थितवतामिति, निर्विशेषस्य ब्रह्मण स्तद्भावापत्तिरूपमुक्तेश्च श्रुति सूत्राऽविषयत्वेनाऽप्रमितत्वाच्चे त्यलंविस्तरेणेति शिवम्।

---

## ९. निबन्धसाफल्यपरिष्कारः.

ननु , यद्यपि भवता विमताऽभ्युपगतसकलाऽर्थानामपि श्रुतिसूत्र विरोधनिरूपणद्वारा विशिष्टशिवाऽद्वैतसमयएव श्रुतिसम्मतइति निरणायि।

तथापि , प्रतिभाविशेषशालिभिः परै रत्र परिष्कृताना मर्थानां विपर्यासो य द्यापाद्येत।

तर्हि निबन्धोऽय मफल स्सम्पद्येत। इति चेत्। उच्यते। अतीन्द्रियेषु ब्रह्मादिषु विषये " अतीन्द्रियाऽर्थे श्रुतिरेव मानमिति श्रुते रेव परमप्रमाणतया " तदर्थस्यच भगवद्बादरायणनिर्धारितस्यैव यथाऽर्थतया श्रुतिसूत्राऽनुरोधेनाऽत्रवेदान्तार्थाः परिष्कृताः। अथ ये प्रतिभाबलेन वैयासिकसूत्राणि व्याकुलीकुर्वाणा स्तांस्ता नर्था न्विपरिवर्तयेरन् ते स्वसमयगत मनार्जवं विशदीकुर्वीरन् सानुगा निश्श्रेयसा त्प्रतिहन्येर न्ननर्थं मप्याप्नुवीर न्नैतावता प्रकृतनिबन्धस्य न किमपि स्या द्वैफल्य मित्यल मनागताऽनर्थशंकया।

---

## १०. केवलाद्वैतशास्त्रकर्तृभावपरिष्कारः

नन्वेवं विमतजातस्य श्रुतिसूत्रोपरुद्धत्वे विमतमुख्यभूत केवलाऽद्वैतशास्त्रकर्तॄ णां भावःक इति निष्कृष्टव्यः। नहि श्रुतिसूत्रविप्रतिपन्नं प्रस्थानं निर्माय जिज्ञासुजनप्रतारणे न किमपि तेषां प्रयोजन मुत्पश्याम इतिचेत्। उच्यते। अत्र यद्यपि शास्त्रकर्तॄणां मुमुक्षुजनवंचने न किंचिदपि तात्पर्य मस्ति। तथापि , इयमेवाऽत्र वस्तुस्थितिः। श्रु॥ आत्मावाऽरे द्रष्टव्य इति

भगवती श्रुतिःमुमुक्षुंप्रति मोक्षपरमसाधनतया परमेश्वरसाक्षात्कारं विधाय तदुपायतया श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति श्रवणमननपूर्वं निदिध्यासन मुपदिशति । निदिध्यासनन्नाम ध्यानयोगइति साधन परिष्कारे ऽवादिष्म । तस्यच सर्वेतरवासनाविस्मरणप्रयोज्यतया, सर्वेतरवासनाविस्मरणस्यच ईश्वरैक्यप्रतिपत्त्येव स्वात्मैक्यप्रतिपत्त्यापि सुसाधतयाच स्वात्मैक्यप्रतिपत्तिपरं केवलाऽद्वैतमपि समयं परमेश्वर साक्षात्कारसुखसाधन म्मन्वानै रीश्वरप्रत्यभिज्ञानशास्त्रकर्तृभिरपि उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिता'इति न्यायेनाऽन्वगामि । तदनु यायिभि र्बादरिप्रभृतिभिः कतिभिश्चि न्मुनिभि रप्यन्वसारि। एममपि तस्याऽध्वन स्सर्वश्रुतिविप्रतिपन्नतया वेदाचार्येण सूत्रप्रस्थाने सू. ॥ आभासा एवेत्यादिना निराकारीतिच विशदमेव ।

एवमपि, मुमुक्षुजनाऽनुजिघृक्षया केवलाऽद्वैतस्य श्रुतिसूत्र सम्मतिप्रदर्शनद्वारा विजिज्ञासुजनविस्रम्भभाजनता मुपनिनीषुभि राचार्यैः प्रवर्तित मिति विज्ञायते ।

अतएव वासिष्ठकाराअपि—

दृश्यं नास्तीति बोधेन मनसो दृश्यमार्जनम् ।
सम्पन्नं चे त्तदुत्पन्ना परा निर्वाणनिर्वृतिः ॥
संशान्तसर्वसंकल्पा या शिलव दवस्थितिः ।
जाड्यनिद्राविनिर्मुक्ता सा स्वरूपस्थितिः स्मृता ॥
संकल्पित्वंहि बन्धस्य कारणं त त्परित्यज ।
मोक्षस्तु निस्संकल्पित्वं तदभ्यासं धिया कुरु ॥

इतिच , मोक्षहेतुभूतध्यानयोगसुखसाधनतया संकल्प राहित्यमेव , सू ॥ सामीप्यात्तु तद्व्यपदेश इति न्यायेन मोक्ष तयैव व्यवजहुः । किराटोपाख्याने कपर्द मन्वेषयता रत्न मलभ्यतेति दृष्टान्तेन " अन्य दन्विष्यते चाऽन्य ल्लभ्यतेहि गुरुक्रमादिति कंठरवेणैव निस्संकल्पित्वं साधयतां ध्यानयोगसिद्ध्या परमेश्वरसाक्षात्कार स्समुप लभ्येते त्यमु मर्थं स्पष्टीचक्रु रिति विशदम् ।

ननु , भवता केवलाऽद्वैतशास्त्र मीश्वरप्रत्यभिज्ञानहृदयकारै रभ्युपगत मिति ततएव वादरिप्रभृतिभिरपि प्रत्यग्राहीतिच निगदितम् ।

ततश्च , ईश्वरप्रत्यभिज्ञानस्य शिवागमसिद्धतयाऽद्वैतशास्त्रमपि शिवागमनिकरादे वोद्धृत मिति व्यञ्जितम् । त दसत् । केवलाऽद्वैतं योगवासिष्ठा त्समुद्धृत मि त्यवगम्यमानत्वा दितिचे न्न । वासिष्ठ कारै र प्यद्वैतशास्त्रस्य शिवागमेभ्यएव समुद्धृतत्वाऽवगमात् । तथाच। निर्वाणप्रकरणे

हे वसिष्ठ महाभाग ब्रह्मपुत्र महा नसि ।
गुरुत्वं शक्तिपातेन तक्षणादेव दर्शितम् ॥

दर्शना त्स्पर्शना च्छब्दा त्कृपया शिष्यदेहके ।
जनये द्य स्समावेशं शांभवं सहि देशिकः ॥

शिष्यप्रज्ञैव बोधस्य कारणं गुरुवाक्यतः ।
मलत्रय मपक्वं चे त्कथं शुध्यति पक्व दिति ॥

विश्वामित्रवाक्ये शिवागमैकसिद्धशक्तिपातशाम्भवसमावेश मलत्रयपरिपाकाद्यनुवादेन वासिष्ठकारै रद्वैतशास्त्रस्य शिवागमेभ्यएव समुद्धृतत्वाऽवगमात् ।

नन्वेवं केवलाऽद्वैतस्य शिवागमसिद्धत्वे तन्निरसनं न युज्यत इति चे न्न । त्रिपदार्थं चतुष्पादं प्राह तन्त्रमिति पशुपाशपतिरूपतत्त्वत्रय मयशिवाऽद्वैतस्यैव श्रीशिवागमतात्पर्यसिद्धत्वेन तत्र विद्यमानस्यापि केवलाऽद्वैतस्य वेदाचार्यादिमहर्षिनिराकृतत्वे नैकदेशिमतत्वसम्प्रतिपत्ते रि त्यलं प्रसक्ताऽनुप्रसक्त्या । इतिशिवम् ।

अन्यै स्स्वप्रतिभावला यदपथं सम्बाध मुत्प्रेक्षितं
प्राग्भि र्य स्समुपेक्षितं बुधवरै स्तत्खण्डनेऽनादरात् ।
वेदान्ताऽर्थततिव्यवस्थितिविधौ य च्चोदितं शम्भुना
त त्सर्वं गिरिशप्रसादमधुरं भाग्य म्मदीयं परम् ॥ १

समन्ता द्वर्तन्ता मतिविपुलविद्यावल्युजो
विपर्यासिऽर्थानां पटव इह मत्ताइव गजाः ।
न लक्ष्यीकुर्म स्तान् स्वबलभृशविश्वासविवशान्
बलं याथार्थ्यं नोऽप्रतिहत मिहेऽन्वेऽक्षयतमम् ॥ २

अमार्गात्तो नाको नरकइव नेष्टः कथमपि
सुमार्गे य ल्लब्धं निधनमपि न श्शाश्वतधनम् ।
यशोवा मृत्युर्वा जयति पथि सत्ये प्रचरताम्
विधेयोऽस्माकं त न्निगममतनिर्धारणविधिः ॥ ३

तत्तन्मतप्रत्ययशालिचेतसां
महाजनानां मतिभेदसाहसात् ।
वेदाऽन्तयाथार्थ्यपरीक्षणोत्सुक
सुधीसमाराधनलाभलोभतः ॥ ४

रज्ज्वा चलि न्योभयदेशपाशया
ह्याकृष्यमाणस्तु चला दित स्ततः ।
कर्तव्यमूढोपि परात्मयन्त्रितोऽ
भूवं प्रवृत्तो निगमाऽर्थनिर्णये ॥ ५

श्रुतिशतं दिशतः परमेशितु
स्तदनु सूत्रयतश्च महामुनेः ।
मतमिहाकुलितंकिल यै रलं
स्वमतसृष्टिपरै रिह तै रलम् ॥ ६

मा मा मागृह्णीध्वं
प्रतिव स्याचार्यनिचयवचन मिति ।
न्याय्याऽर्थाप्त्यै पार्थो
युध्य न्गुरुभिः प्रमाण म्मे ॥ ७

सम्भाव्य मत्ताऽवगुणं मदीयम्
सन्तं गुणंचैव मदन्तरात्मनः ।
सम्भावयन्त स्सुजनाऽनुजीविनो
ममाऽनुगृह्णन्तु कृतिं महान्तः ॥ ८ ·

व्याससूत्रेद्ध वेदान्तसुमनस्स्रक्सुगन्धिलम् ।
श्रीनीलकण्ठकथितं शिवाऽद्वैतमतं परम् ॥ ९

मताऽभिमाना न्मोहाद्वा भ्रमाद्वा नाऽनुयान्ति ये ।
तेऽन्धगोलांगूलनामन्यायोदाहरणं ध्रुवम् ॥ १०

लिंगांवाहृदयेशेन नागलिंगेन निर्मितः
वेदान्ताऽर्थपरिष्कार श्शिवांघ्रियुगळेऽर्पितः ॥ ११

षट्त्रिंशत्समुदंचितपंचसहस्रीमितेषु वृत्तेषु ।
कल्यब्देषु विरचितोऽखिलवेदाऽन्तार्थनिष्कर्षः ॥ १२

शिवम् ।

हरःओम् । तत्सत्

---

श्री

## —*दक्षिणामूर्तिदेवस्तुतिः*—

श्लो॥ शक्त्या य श्चिदचिद्विशेषयुतया युक्तो जगद्रूपया
ज्ञानेच्छाकृतिरूपया सहजया सन्तिष्ठते केवलः ।
जन्मादीनि करोति पंच जगतः कृत्यानि यो लीलया
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ १

सर्वाऽवस्थजगच्छरीरकतया य स्तत्प्रकारः परः
सूक्ष्मस्थूलदशाविशेषितजगद्रूपेण विद्योतते ।
इ त्यावेदयितुं वदंति निगमाः कार्यंच , यं कारणं ।
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ २

यत्राऽऽन्तर्गणिकं विशेष मितरे कैवल्यमेवाऽन्ततो
मन्वाना विवदंति मुख्य मपरे देवे विशिष्टे श्रुतं ।
ऐक्यं यस्यच यद्विशेषणगतं भेदं ब्रवीति श्रुति
स्तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ३

बहुधो नैगमसूक्तय श्चिदचितो रीशस्य यस्यैवच
भोक्तृत्वेनच भोग्यभाववशत स्तत्प्रेरकत्वादपि ।
वैलक्षण्य मवार्थमेव सहजं संचक्षते सादरं
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ४

शास्तेऽन्त स्समनुप्रविश्य सततं यश्चेतनाचेतनौ
तौ यस्यैव नियम्यभाववशत स्तन्वा वुवाच श्रुतिः ।
एवं य श्चिदचिद्विभागकलनोदंचज्जगद्विग्रह
स्तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ५

सार्वज्ञ्यप्रमुखं शुभं गुणगणं ब्रूते गुणित्वाऽर्थिका
क्षुत्तृष्णादि मभव्यमेव नुदते किंचाऽगुणत्वाऽर्थिका ।
यस्यै वोभयलिंगतां पशुपते र्वक्तुं प्रवृत्ता श्रुति
स्तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ६

तादात्म्यं त दसीति बोधयति य स्येशस्य शिष्यं गुरुः
ब्रह्माऽस्मीति विभाव्य याति य मनन्येनैव भावेन हि ।
पत्यु र्यस्य पशो रुपासनविधा वद्वैत माह श्रुति
स्तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ७

प्राणि न्मे तनुरस्यथापि नतु मां वेत्सि त्वदन्तस्स्थितं
मां जानासि नियामकं यदि तदा मृत्यो र्मुखा न्मुच्यसे ।
इत्यर्थं प्रकटीकरोति सदयो य श्चारुचिन्मुद्रया
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ८

संचिन्त्यापि विशिष्य वक्तु मनलं धीवागमेयात्मक
माचार्या विफलोद्यमा य मविशेषं संगिरन्ते परे ।
शेषो यस्यच शेषिण श्चिदचिदाकारः प्रपंचोऽखिल
स्तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ९

ब्रह्मेन्द्रो न विवेदतु नं वदितुं वेदोपि वेदैव यं
वेदाऽह न्त्विति यं ब्रवीति हि जग त्येक स्स नारायणः ।
भक्त्या वेत्ति मुकु त्यनन्यगतया यं यत्प्रसादात्तया
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ १०
वाणी वारिजसंभवस्य रमणी त्यासेवि मौनव्रतं
लक्ष्मीः पंकजचक्षुपः प्रियतमे त्यामोदि भिक्षाटनं ।
येनाम्नायकृता स्वसेवकवधूसंभोगबीभत्सया
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ११
य स्यैश्वर्यं मतर्क्यं मूहितु मुपक्रम्य भ्रमा दन्यथै
वाऽन्योन्यं वहु विब्रुव न्मुनिगण स्संव्याहताऽर्थाविलैः ।
स्वाज्ञानं विवरीवरीति सुघनं स्वीयै रहो दर्शनै
स्तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ १२
पूर्वेषां परमो गुरु र्निगदितः कालाऽनवच्छेदतः
कालेनाऽऽकलितात्मनां हि सकलानां यो गुरूणामपि ।
यस्मि न्नेवच कालकाल इति शब्दोऽयं यथाऽर्थाक्षर
स्तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ १३

योगिनो नागलिङ्गस्य
लिङ्गाम्बाहृदयेशितुः
कृति स्स्या दिष्टदा नॄणां
दक्षिणाशामुखस्तुतिः ॥

—*शिवं भूयात्॥*—

ॐ

शिवाय गुरवे नमः

# विज्ञप्तिरूपकम्.

---

अखिलनिगमसूत्रै राजवोपार्ज्यमानं
जननुतमुनिपाख्याऽनेकथा भाव्यमान ।
मपमसुखनित्य न्तत्त्व मत्यन्तसत्य
मनवधिमवपाशोन्मोचकं रोचतां वः ॥

( नान्द्यन्ते )

सूत्रधारः -— (पञ्चपपदानि गत्वा , पुष्पाञ्जलिं विकीर्य , नेपथ्याऽभिमुख मवलोक्य) कृतिकन्ये ! इतस्तावत् ।

( प्रविश्य )

ब्रह्मपथवेदान्ताऽर्थपरिष्कारकृतिकन्ये—इमे स्वः ।

सूत्रधारः — पुत्र्यौ ! किं मद्य चिकीर्षथः ।

नव्यौ— तात ! आवाभ्या मभ्यस्तं वस्तु, आपरितोषा द्विदुषा मिति सूक्ति मनुरुध्य , उत्तुंगपण्डितसंगेऽखण्डमहीमण्डलरंगेऽभिनि नीषावहे ।

सूत्रधारः —मदुक्ति मवहिते श्रुणुत ।

महारथविभीषणं ननु यथा नियुद्धांगणम्
महामहभयावहं विजयतेहि गोष्ठीगृहम् ।

इदं न भवनांगणं शिशुकुमारवृद्धांगनं
सभाजनसभाजना हृत मुपारमेतां सुते ॥

किञ्च, प्राय स्सूरयोऽसूयोमयहृदया अतएव किलाऽऽच
चक्षे महाकविपालिमौलिलालिताऽकुण्ठकण्ठश्रीनीलकण्ठः —

दोषः क्वचि त्कश्चि दिह प्रतीतः
प्राचा मलंकारविदां प्रवादः ।
सर्वप्रबन्धाऽ नुगत स्तु मन्ये
कर्तुः कवे र्जीवनमेव दोष इति ॥

अत स्स्वसमकालिकीं कृतिं न मृष्येरन् ।

नक्रौ — तात! सुमनसो न त्रासहेतवः । यतः ।
गृह्णीयु स्सुगुणा न्कृतिव्रजगता नुद्घोपयेयुः क्षितौ
संशोध्याऽवगुणा न्विमर्मनधिया निर्णोदयेयुः परम् ।
पश्येयुः करुणार्द्रशीतलदृशा पुत्रीं यथा सादरम्
मेतु न्दूरतएव हातु मपिवा किं विन्दवो दानवाः ॥

सूत्र — मासाहस मवलम्बिपार्थां यतः । युवाभ्या मभिनिनीषितं
वस्तु स्वतएव समस्तजनमस्तकशूलदम् ।

अपिच, प्राज्ञाअपि स्वस्वपुरातनसम्मत म्मतं पैतृकमिव
धन मभिमन्वते ।

अतएव, प्रतिवदतः प्रतियोधानिव शास्त्रशस्त्रिकाभिः विषम गतिविपश्चुतियोजितैः पदवाक्यप्रमाणप्रहरणगणै राविध्यन्तिच ।

नव्यौ — तात! यद्यपीदं सर्वं तथ्यमेव । तथापि, तत्ताद्दक्षोऽभि मानः प्राचा मासीत् । अधुनातनानां सत्याऽन्वेषणप्रवणधिषणानांतु न संलक्ष्यते । अत स्ते प्रस्तुतं वस्तु परिशीलितुं न सर्वथा समुत्स हेरन्निति न युज्यते विश्वसितुम् । अतो रंगप्रवेशमंगळविधये काम मनुमतिप्रदानेनाऽनुगृह्णीतु मर्हसि ।

सूत्र — वत्से! अनर्थ मभिवर्धयितुं माप्रयतध्वम् ।

अफले क्लेशविशालेऽनारतवैराकुले कथं कृत्ये
रति मुपयाति मति र्वां वत किं कुर्यां क्व वा यायां ।

नियतिनिघ्ने भवत्यौ प्रतिरोद्धु मनीशोऽस्मि । साधयत मभीप्सितम् । सत्यात्मा परा देवता सहायान्ती युवां गोपाय्यात् ।

नव्यौ — सविनयम्, सदस्या नभिवीक्ष्य,

प्रज्ञाविशेषं भृशवैदुषींवा
प्रख्यातु मावां नकिल प्रवृत्ते ।
वागर्थरूपोपहिताम्बिकेश
सिसेविषायत्त मनीषयैव ॥

आबद्धाञ्जलियुगळे
नत्वौ व इमं वरं वृणुतः ।
अस्मदवलोकनभवं
भावं संदिशत कृतिजनितइति ॥

—* अपिचेद मस्तुभरतवाक्यम् । *—

वस्तु न्यस्तु शरीरिणा स्परतरेऽशेषोऽभिलाप स्सदा
सन्त स्सन्तु नितान्तशान्तिसुगुणाक्रान्ता स्समन्ता द्भुवि ।
क्ष्मां सर्वामपि भूपयन्तु कृतधीवर्याः क्षमाभूषणाः
विद्वांसः परिपूरयन्तु रसगम्भीरै र्निबन्धै रसाम् ॥



—* शिवम्भूयात् ॥ *—

———

तेनालि शारदा मुद्राक्षरशालायां मुद्रितः—१२-१९३६.

# साध्वसाधु पत्रिका।

| पृष्ठ | पंक्ति | असाधु | साधु |
|---|---|---|---|
| २ | ७ | व्रजन्त्य | गतान्य |
| | ८ | फुल्लन्ति | फुल्लानि |
| ८ | १० | त्व | त्वा |
| ,, | ,, | भिधोय | भिधीय |
| १० | ३ | स्त्यै | स्थै |
| | | ब्रह्म | ब्रह्मा |
| २२ | १७ | तल्लभो | तल्लाभो |
| ४८ | ८ | स्थूलमूक्ष | स्थूल |
| ५८ | ४ | द्वोकतृ | द्वोक्तृ |
| ७२ | १३ | समन्य | समन्व |
| ८३ | ७ | परिष्करः | परिष्कारः |
| ९२ | १९ | जाग | जाग्र |
| ९५ | २२ | स्वस्ये | स्येश्वर |
| ११५ | १६ | स्पर्शास्य | स्पर्शस्य |
| १४३ | ८ | शररित्व | शरीरत्व |

ब्रह्मपथे—वेदपथे

| | | |
|---|---|---|
| शिवाद्वैतपथविधिः | .... | रु ०–८–० |
| केवलाद्वैतपथप्रतिषेधः | .... | १–०–० |
| वैष्णवपथप्रतिषेधः | .... | ०–१२–० |
| व्यासपथः | .... | १–०–० |

ब्रह्मपथःसमग्रः

| | |
|---|---|
| शिवाद्वैतपञ्चिकाख्यव्याख्यासनाथः | रु ३–०–० |

---

*For Copies Apply to:—*

**Mahopadhyaya**

**Brahma Sree Mudigonda Nagalinga Sastry.**

TENALI, Guntur District.

---